# JAINA TATTVA PRADEEP

BY

Nyaya-Visharad Nyayatirtha Pravartaka

SHREE

MANGAL VIJAYJI MAHARAJ

*disciple of*

Shastra Visharad Jainacharya

SHREE VIJAYA DHARMASURIJI, A.M.A.S.B.



Printed by Manager GAURI SHANKAR LAL, at the Chandraprabha Press,

BENARES.

Published by ABHAYCHAND BHAGWANDAS GANDHI with the pecuniary help of many gentlemen.

---

*Veer-Era 2444.* 500 copies. *A. D. 1918.*



शास्त्रविशारद-जैनाचार्य श्रीविजयधर्मसूरि.

# उत्सर्गोद्गारः ।

श्रमेण महता पद्भ्यां गत्वा गूर्जरराष्ट्रतः ।
काश्यां संस्थापितो येन जैनविद्यालयो महान् ॥१॥
तत्रत्यान् प्रौढपाण्डित्यमण्डितान् पण्डितान् पुनः ।
जैनधर्मे स्फुरत्तर्कैर्निःसन्देहीचकार यः ॥२॥
वङ्गदेशे विहारेण येन धर्मोपदेशतः ।
मांसभक्षिनृचेतस्सु रोपितः करुणाङ्कुरः ॥३॥
काशीनरेशप्रामुख्ये सर्वभारतपण्डितैः ।
यः पुनर्भूषयामासे गरिष्टपदमानतः ॥४॥
हिंसादोषनिरासाय दयाधर्मप्रवृद्धये ।
वाराणस्यां कृपालुर्यः पशुशालामतिष्ठिपत् ॥५॥
पुरे योधपुरे येन जैनसाहित्यपर्षदम् ।
उत्पाद्योद्घोषयांचक्रे शिक्षाव्यापारडिण्डिमः ॥६॥
प्रतिग्रामं प्रतिपुरं सर्वतः सार्वभाषणैः ।
लोकोपकारकरणं व्रतं यस्यास्ति निश्चलम् ॥७॥
शरत्सुधांशुपीयूषसुन्दराचारसुन्दरः ।
स श्रीविजयधर्माख्यः सूरिः प्रख्यात एव हि ॥८॥
यत्किञ्चिदुन्नतिं प्राप्तो मादृशोऽपि जडाशयः ।
तत्र हेतुर्न कोऽप्यस्ति त्वत्प्रसादिदृशं विना ॥९॥
गुरो ! त्वत्कृपयैवाऽहमियतीं प्रापितो भुवम् ।
त्वदृणाद् मुक्तमात्मानं कर्त्तुं नैवास्मि शक्तिमान् ॥१०॥
उत्सृजामि तथाऽप्येतत् किञ्चित् त्वत्करपङ्कजे ।
मन्ये चातो निजं जन्म कृतार्थीभूतमंशतः ॥११॥

मङ्गलविजयः ।

॥ अर्हम् ॥

नमो नमः श्रीप्रभुधर्मसूरये ।

# प्रस्तावना ।

न खलु बुधमानिनोऽप्यन्यशास्त्रविहितयथोचितप्रयत्ना अपि विचक्षणाः प्रायः प्रभविष्णवोऽवगाहितुं दुस्तरमपारमार्हतप्रवचनागाधसागरम्, आसतामितरे साधारणमनीषाशालिनो जनाः, इति सुगभीरार्थमपि तत्प्रवचनं सुखेनाधिगन्तुं प्राक्तनैर्भद्रबाहुस्वामि-वाचकमुख्य-सिद्धसेनदिवाकर-जिनभद्रगणिक्षमाश्रमण-हरिभद्रसूरि-हेमचन्द्राचार्यप्रभृतिभिर्दुःषमाररजनिभास्करोपमैराचार्यपुङ्गवैस्तत्साधनभूता अनेके ग्रन्था विनिर्मिताः, तेभ्योऽपि तादृशस्योपकारस्यासंभवं विभाव्य परोपकारनिरतमानसैर्भगवद्भिर्न्यायविशारद-न्यायाचार्य-महामहोपाध्यायश्रीयशोविजयगणिभिरनेके तर्कसिद्धान्तरहस्यपरिपूर्णा विरचिता ग्रन्थाः; किन्तु कालबलेनाधिकाधिकबुद्धिमान्द्यमाबिभ्रतामिदानीन्तनजनानामतिदुरधिगमाः संजातास्ते । अतोऽल्पसंस्कृतज्ञानामपि समासतोऽथ च स्फुटतयाऽऽर्हतमतप्रतिपादितपदार्थतत्त्वज्ञानमिच्छूनां जनानामल्पायासेन तदवबोधाय तत्त्वार्थाधिगमादिग्रन्थानुपजीव्य सरलभाषात्मकोऽयं जैनतत्त्वप्रदीपनामा नूतनप्रणाल्या लक्षणप्रदर्शनपुरस्सरं पदार्थतत्त्वप्रतिपादको ग्रन्थोऽल्पबुद्धिनापि मया सुविख्याताभिधानानां गुरुवर्याणां शास्त्रविशारद-जैनाचार्यश्रीमद्विजयधर्मसूरीश्वराणां, मदीयगुरुभ्रातृणामनल्पशास्त्रविदग्धबुद्धीनामुपाध्यायश्रीमदिन्द्रविजयानां च कृपयाऽवाप्तसामर्थ्येन प्रणीतः ।

ग्रन्थेऽत्र सप्ताधिकारा अधिकृताः। तत्र—

प्रथमाधिकारे जीवोपयोगबन्धमोचनोपायप्रभृतिपदार्थानां प्रतिपादनम्।

द्वितीयाधिकारे अजीवधर्मास्तिकायादीनां विशेषतः पुद्गलानां च निरूपणम्।

तृतीयाधिकारे आश्रवतत्त्वस्य कारणप्रदर्शनपूर्वकं तद्भेदप्रभेदानां निदर्शनम्।

चतुर्थाधिकारे बन्धकारणीभूतकर्मणां सभेदप्रभेदानां प्रतिपादनम्।

पञ्चमाधिकारे संवरतत्त्वस्य प्रपञ्चनम्।

षष्ठाधिकारे निर्जरातत्त्वस्य स्वरूपकारणादिनिर्देशपुरस्सरं विवेचनम्।

सप्तमाधिकारे मोक्षतत्त्वस्य स्वरूपनिरूपणम्।

एवं च जैनशास्त्राभिमतानां सप्तानामपि तत्त्वानामत्रैकैकमधिकारमधिकृत्य निरूपणं विहितम्। ग्रन्थेऽत्र लक्षितानां शब्दानामकारादिवर्णानुक्रमेण सूचीपत्रमपि ग्रन्थप्रान्ते योजितम्। एवं च कृते यथासाध्यप्रयत्नेऽपि या काचित् त्रुटिः, यः कश्चित् प्रमादजन्योऽशुद्ध्यादिदोषः, यत् किञ्चिद् वा सूत्रवैपरीत्यं ग्रन्थेऽत्र स्यात्, तत् कृपार्द्रचेतसः सज्जनाः परिशोधयिष्यन्तीति।

आशास्ते

मुनि-मङ्गलविजयः।

॥ अर्हं ॥

॥ नमोनमः श्रीप्रभुधर्मसूरये ॥

# जैनतत्त्वप्रदीपः

नत्वा श्रीमन्महावीरं धर्मसूरिं गुरुं तथा ।
जैनतत्त्वप्रदीपाख्यं ग्रन्थं कुर्वे यथामति ॥१॥

जैनमते तावत्—

जीवाजीवाश्रवबन्धसंवरनिर्जरामोक्षलक्षणाः सप्त पदार्थाः । अथ तेषां लक्षणद्वारा स्वरूपं प्रतिपाद्यते, तत्र—

उपयोगवत्त्वं जीवस्य लक्षणम् ।

उपयोगः कः पदार्थः ? इति जिज्ञासायामुच्यते,— ज्ञान-दर्शनयोः सम्यक् स्वविषयकसीमानुल्लङ्घनेन धारणरूपत्वम्, बाह्याभ्यन्तरनिमित्तकत्वे सति आत्मनो यथायोगं चैतन्यानुकारिपरिणामविशेषरूपत्वं वोपयोगस्य लक्षणम् ।

स च जीवो द्वेधा, बद्धमुक्तभेदात् । तत्र बद्धस्य मोचनोपायः सम्यग्दर्शन-ज्ञान-चारित्रसमुदायरूप इति तेषां क्रमेण लक्षणान्युच्यन्ते;—

परिणामविशेषात्तनिसर्गाधिगमजनितो यस्तत्त्वार्थश्रद्धानरूपो व्यापारस्तज्जनकपरिणामविशेषरूपत्वम्, शम-

संवेगादिलिङ्गाभिव्यङ्ग्यत्वे सति निसर्गाधिगमजन्यतत्त्वार्थश्रद्धानजनकात्मपरिणामरूपत्वम्, शमादिलिङ्गाभिव्यङ्ग्यत्वे सति तत्त्वार्थश्रद्धानजनकविशिष्टात्मपरिणामरूपत्वं वा सम्यग्दर्शनस्य लक्षणम् ।

अथ तादृशलक्षणान्तर्गतनिसर्गाधिगमयोर्लक्षणे प्रदर्श्येते-

अनिवृत्तिकरणरूपत्वम्, परोपदेशानपेक्षत्वं वा निसर्गस्य लक्षणम् । परोपदेशसापेक्षत्वमधिगमस्य लक्षणम् ।

प्रमाणनयरूपविशेषहेतुकत्वे सति जीवादिपदार्थविषयकयथार्थावगमरूपत्वम्, प्रमाणनयनिमित्तकजीवादितत्त्वविषयकयथार्थावबोधात्मकत्वम्, विषयप्रतिभासित्वे सति आत्मपरिणतिमत् तत्त्वसंवेदनं वा सम्यग्ज्ञानस्य लक्षणम् ।

भवनिमित्तनिवृत्तिशीलत्वे सति सम्यग्ज्ञानवतो योगव्यापारोपरमकत्वम्, भवनिमित्तनिवृत्तिनिमित्तकत्वे सत्यऽव्यवधानेन मोक्षजनकत्वम्, सावद्ययोगविरतिरूपत्वं वा सम्यक्चारित्रस्य लक्षणम् ।

एतेषां जीवादिपदार्थानां विशेषेण ज्ञानं नामस्थापनाद्रव्यभावद्वारा, इति तल्लक्षणप्रतिपादनावसरः; तत्र-

अन्यार्थे स्थितमर्थनिरपेक्षं पर्यायानभिधेयं वस्तुनोऽभिधानम्, पर्यायानभिधेयत्वे सति अन्यार्थेऽन्वर्थे वा स्थितं सत् तदर्थनिरपेक्षसापेक्षान्यतररूपं वस्तुनोऽभिधानम्, स्वेच्छानुरूपं वस्तुनोऽभिधानं वा नाम्नो लक्षणम् ।

तदर्थवियुक्तत्वे सति तदाभिप्रायेण तत्सदृशं यल्लेप्यादिकर्मरूपं तत् स्थापनाया लक्षणम्, यद् सद्भूतार्थशून्यं सत् तद्बुद्ध्या तादृशाकारेण निराकारेण वाऽन्यस्मिन्नारोपकरणं तद् वा ।

अतीतानागतपरिणामकरणत्वम्, इदानीमसत्त्वेऽपि भूतभविष्यत्पारिणामयोग्यत्वं वा द्रव्यस्य लक्षणम् ।

विवक्षितक्रियानुभूतियुक्तत्वम्, विवक्षिततत्तत्क्रियानुभूतियुक्तत्वं वा भावस्य लक्षणम् ।

अथ प्रमाणनयलक्षणः पदार्थाधिगमोपाय इति, सम्यग्ज्ञानलक्षणान्तर्गतप्रमाणनयस्वरूपजिज्ञासायां वा तल्लक्षणप्रतिपादनम्, सर्वनयावलम्बिविज्ञानाविशेषरूपत्वम्, स्वपरावबोधकत्वे सति ज्ञानस्वरूपत्वं वा प्रमाणसामान्यलक्षणम् ।

तच्च प्रमाणं द्विधा, प्रत्यक्ष-परोक्षभेदात् ।

तत्र प्रथमतः परोक्षप्रमाणं लक्षणद्वारा प्रतिपाद्यते—

इन्द्रियानिन्द्रियसापेक्षत्वे सति साकारावगमरूपत्वं परोक्षप्रमाणस्य लक्षणम् । प्रत्यक्षलक्षणं त्विदम्—

इन्द्रियानिन्द्रियानपेक्षत्वे सति व्यपगतव्यभिचारपूर्वकसाकारावगमरूपत्वम्, इन्द्रियानिन्द्रियनिरपेक्षत्वे सति आत्मनः साक्षादर्थपरिच्छेदात्मकत्वं वा प्रत्यक्षस्य लक्षणम् ।

परोक्षं द्वेधा, मति-श्रुतभेदात् । तत्र—

इन्द्रियानिन्द्रियनिमित्तकत्वे सति योग्यदेशावस्थितवस्तुपरिच्छेदरूपत्वं, सम्यग्दर्शनिनः क्षीणाक्षीणदर्शन-

समकस्यावग्रहादिभेदभिन्नस्य ज्ञानविशेषस्य योऽपायांश-स्तद्रूपत्वम्, अवग्रहादिभेदभिन्नस्य ज्ञानविशेषस्य योऽपायांशस्तद्रूपत्वं वा मतिज्ञानस्य लक्षणम्।

सा च मतिर्द्वेधा, श्रुतनिश्रिताऽनिश्रितभेदात्।

श्रुतपरिकर्मितमतेर्व्यवहारकाले पुनरश्रुतानुसारितया समुत्पद्यमानबुद्धिरूपत्वम्, शास्त्रपरिकर्मितमतेरुत्पादकाले शास्त्रार्थपर्यालोचनं विनैव जायमानबुद्धिरूपत्वं वा श्रुतनिश्रितमतेर्लक्षणम्।

श्रुताभ्यासं विना स्वाभाविकविशिष्टक्षयोपशमवशाज्जायमानबुद्धिरूपत्वम्, सर्वथा शास्त्रार्थस्पर्शरहितस्य केवलमतिज्ञानावरणक्षयोपशमानुभावेन यथावस्थितवस्तुपरिच्छेदकबुद्धिरूपत्वं वाऽश्रुतनिश्रितमतेर्लक्षणम्।

तत्र श्रुतनिश्रितं चतुर्धा, अवग्रहेहापायधारणाभेदात्।

अनिर्दिश्यमानसामान्यमात्रार्थग्रहणरूपत्वमवग्रहस्य लक्षणम्। अवग्रहश्च द्विप्रकारः, व्यञ्जनावग्रहः, अर्थावग्रहश्च। तत्र शब्दादिरूपेण परिणतद्रव्याणामुपकरणेन्द्रियैः सह प्रथमतः संप्राप्तसंबन्धरूपत्वं व्यञ्जनावग्रहस्य लक्षणम्।

तस्माद् मनागनिश्चयरूपत्वमर्थावग्रहस्य लक्षणम्।

अवग्रहादुत्तरकालमपायात् पूर्वं सद्भूतार्थविशेषोपादानाभिमुखोऽसद्भूतार्थपरित्यागपरः "प्रायोऽत्र मधुरत्वादयः शङ्खधर्मा उपलभ्यन्ते, न कर्कश-निष्ठुरत्वादयः शार्ङ्ग-

धर्माः " इत्येवंरूपो यो मतिविशेषस्तद्रूपत्वम्, अवग्रहेण गृहीतस्यार्थस्य व्यतिरेकधर्मनिराकरणपरत्वे सति अन्वय-धर्मघटनप्रवृत्तत्वे च सति अपायाभिमुखबोधरूपत्वम्, अव-ग्रहेण गृहीतस्यार्थस्य धर्मान्तरान्वेषणरूपत्वं वा ईहाया लक्षणम् ।

ईहयेहितस्यार्थस्य 'इदमेव नान्यथा' इत्येवंप्रकारानि-श्चयरूपत्वम्, ईहितस्यार्थस्य निर्णयरूपाध्यवसायविशेषरू-पत्वं वाऽपायस्य लक्षणम् ।

निर्णीतस्यार्थस्य मनसा धारणरूपत्वम्, अपायरूपेण निर्णीतस्यार्थस्य धारणरूपत्वं वा धारणाया लक्षणम् ।

सा त्रेधा, अविच्युति-वासना-स्मृतिभेदात् । तत्र—

एकार्थविषयकोपयोगसातत्यानिवृत्तिरूपत्वमविच्युते-र्लक्षणम् ।

तयाहितत्वे सति स्मृतिहेतुभूतसंस्काररूपत्वं वास-नाया लक्षणम् ।

तस्यैवोपयोगविषयीभूतार्थस्य कालान्तरे 'तदेव' इत्यु-ल्लेखेन समुन्मीलनरूपत्वं स्मृतेर्लक्षणम् ।

अयमत्र भावः । उपयोगावधिस्पन्दरूपाऽविच्युतिः । सा चान्तर्मुहूर्तकालप्रमाणा । ततस्तयाऽऽहितो यः संस्कारः सा वासना । सा च संख्येयासंख्येयकालमाना । ततः कालान्तरे कुतश्चित्तादृशार्थदर्शनादिकारणात् संस्कारं प्रबो-

थयत् सज्ज्ञानमुदयते 'तदेवेदं यन्मया प्रागुपलब्धम्' इत्यादि सा स्मृतिः । एताश्चाविच्युति-वासना-स्मृतयो धारणालक्षणसामान्यान्वर्थयोगाद् धारणाशब्दवाच्याः ।

अवग्रहादयस्तु प्रत्येकं द्वादशविधाः, बहु-बहुविध-क्षिप्रा-निश्रितासंदिग्ध-ध्रुवेतरभेदात् । तल्लक्षणानि च क्रमेणैतानि;—

आस्फालिते तूर्यवृन्दे 'इयन्तोऽत्र भेरीशब्दाः, इयन्तो वा शङ्खस्वनाः' इत्येवं पृथक् पृथग् युगपद्ग्राहकबुद्धिरूपत्वं बहुग्राहित्वस्य लक्षणम् । तत्रापि माधुर्यादिविविधधर्मयुक्त-शब्दादिग्राहकबुद्धिरूपत्वं बहुविधस्य लक्षणम् । शीघ्रग्राहक-बुद्धिरूपत्वं क्षिप्रस्य लक्षणम् । लिङ्गानपेक्षया वस्तुग्राहक-बुद्धिरूपत्वमनिश्रितग्राहित्वस्य लक्षणम् । सकलसंशयादि-दोषरहितवस्तुग्राहकबुद्धिरूपत्वमसंदिग्धग्राहित्वस्य लक्ष-णम् । सकृज्ज्ञाते सति भूय उपदेशानपेक्षग्राहकबुद्धिरूपत्वं ध्रुवत्वस्य लक्षणम् । विपरीतानां तूक्तविपर्ययेण लक्षणं स्वयमूह्यम् ।

उक्तं श्रुतनिश्रितमतिज्ञानम् । अथाश्रुतनिश्रितं मति-ज्ञानं प्रतिपाद्यते । तस्य च सामान्यलक्षणं प्राग् निर्दिष्टम् । इदानीं भेदप्रतिपादनद्वारा विशेषलक्षणान्युच्यन्ते । अश्रु-तनिश्रिता मतिश्चतुर्धा, औत्पातिकी, वैनयिकी, कार्मिकी, पारिणामिकी च । तत्र—

लोकद्वयाविरुद्धत्वे सति फलेनाव्यभिचारिणी या

बुद्धिस्तद्रूपत्वमौत्पातिक्या लक्षणम् ।

गुरुविनयजन्या उभयलोकफलदात्री धर्मार्थकामशा-स्त्रार्थनिपुणा या बुद्धिस्तद्रूपत्वं वैनयिक्या लक्षणम् ।

तत्तत्कर्मविशेषेषु निपुणा या बुद्धिस्तद्रूपत्वं कार्मिक्या लक्षणम् ।

प्रतिज्ञाहेतुमात्रेण साध्यसाधिका वयःपरिपाकेण पुष्टीभूताऽभ्युदयमोक्षदायिनी या बुद्धिस्तद्रूपत्वं पारिणामिक्या लक्षणम् ।

अत्रसितं मतिज्ञानम् । अथ श्रुतज्ञानमभिधीयते:—

श्रुतज्ञानावरणक्षयोपशमप्रभवत्वे सति द्रव्यश्रुतानुसारिणी याऽऽत्मनस्तत्त्वार्थपरिच्छेदात्मिका परिणतिस्तद्रूपत्वं श्रुतज्ञानस्य लक्षणम्, श्रोत्र-मनोनिमित्तकत्वे सति श्रुतग्रन्थानुसारिबोधरूपत्वं वा, मतिज्ञानपूर्वकत्वे सत्याप्तोपदेशापेक्षया जायमानबोधरूपत्वं वा, वाच्यवाचकभावपुरस्कारेण शब्दसंसृष्टार्थग्रहणहेतुभूतोपलब्धिविशेषरूपत्वं वा तत् ।

अवान्तरभेदास्त्वस्य ग्रन्थान्तरादवसेयाः । प्रतिपादितं श्रुतज्ञानम् । तत्प्रतिपादनेन परोक्षज्ञानमपि प्रतिपादितं भवति ।

अथ प्रत्यक्षं प्रतिपाद्यते । तच्च द्विविधम्, सांव्यवहारिक-पारमार्थिकभेदात् । तत्र सांव्यवहारिकमिन्द्रियानिन्द्रियनिमित्तकमुक्तप्रायम् । पारमार्थिकं तु त्रिविधम्, अवधि-मनःपर्याय-केवलभेदात् । तेषां लक्षणानि चेत्थम्—

अवधिज्ञानावरणक्षयोपशमादिहेतुसांनिध्ये सति आत्मनः साक्षाद् रूपिपदार्थपरिच्छेदकरूपत्वम्, आत्मनो रूपिपदार्थमात्रसाक्षात्कारकरणव्यापारविशेषरूपत्वं वाऽवधिज्ञानस्य लक्षणम् ।

मनोरूपेण परिणतद्रव्याणां परिच्छेदकत्वम्, सर्वतोभावेन मनोद्रव्यपरिच्छेदकत्वं वा मनःपर्यायज्ञानस्य लक्षणम् । मनःपर्याप्तिनामकर्मोदये सति मनोयोग्यवर्गणादालिकानि गृहीत्वा जीवेन मनस्त्वेन परिणतानि यानि द्रव्याणि तद्रूपत्वं द्रव्यमनसः, द्रव्यमनआलम्बनत्वे सति जीवस्य मननव्यापाररूपत्वं भावमनसश्च लक्षणम् ।

तच्च मनःपर्यायज्ञानं द्विविधम्, ऋजु-विपुलमतिमनःपर्यायभेदात् । तत्र सामान्याकाराध्यवसायनिबन्धनीभूतकतिपयपर्यायविशिष्टमनोद्रव्यपरिच्छेदकत्वमृजुमतिमनःपर्यायस्य लक्षणम् । विशेषाकाराध्यवसायनिबन्धनीभूतप्रभूताप्रभूतविशेषविशिष्टमनोद्रव्यपरिच्छेदकत्वं विपुलमतिमनःपर्यायस्य लक्षणम् ।

सर्वद्रव्य-पर्यायसाक्षात्कारकारित्वं केवलज्ञानस्य लक्षणम्, सकलवस्तुस्तोमपरिच्छेदकत्वं वा ।

॥ प्रतिपादितमुपयोगस्वरूपद्वारा प्रमाणस्वरूपम् ॥

पूर्वोक्त उपयोगो द्विविधः, साकार-निराकारभेदात् । तत्र साकारः सविकल्परूपः निराकारो निर्विकल्परूपः । साकारश्चाष्टविधः, पूर्वोक्तज्ञानपञ्चकाज्ञानत्रयभेदात् ।

तत्र ज्ञानपञ्चकं प्रतिपादितम्। अथाज्ञानं प्रतिपाद्यते, कुत्सितं ज्ञानमज्ञानम्, मिथ्यादृष्टेर्ज्ञानमित्यर्थः। तच्च त्रिविधम्, मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानभेदात्।

निराकार उपयोगो दर्शनम्। विषयविषयिसंनिपातानन्तरसमुद्भूतसत्तामात्रविषयकाववोधरूपत्वं दर्शनस्य लक्षणम्।

ततो जातमाद्यं सत्त्वसामान्यादवान्तरसामान्याकारविशिष्टवस्तुग्राहकरूपत्वमवग्रहस्य लक्षणम्। ईहादयस्तु पूर्वोक्तलक्षणा एव।

तच्च दर्शनं चतुष्प्रकारम्, चक्षुरचक्षुरवधिकेवलभेदात्। तत्र—

चक्षुरिन्द्रियविषयकसामान्याववोधरूपत्वं चक्षुर्दर्शनस्य लक्षणम्।

चक्षुर्वर्जापरेन्द्रिय-मनोविषयकसामान्याववोधरूपत्वमचक्षुर्दर्शनस्य लक्षणम्।

अवधिदर्शनावरणक्षयोपशमादिवशाद् विशेषग्रहणवैमुख्येन रूपिद्रव्यविषयकसामान्याववोधरूपत्वमवधिदर्शनस्य लक्षणम्।

केवलदर्शनावरणक्षयादिनिमित्तवशात् त्रैकालिकवस्तुविषयकसामान्याववोधरूपत्वं केवलदर्शनस्य लक्षणम्।

अथ लक्षण-विधानाभ्यां नयस्वरूपं प्रतिपाद्यते;—

अनन्तधर्मात्मकवस्तुनि धर्मान्तरौदासीन्यपूर्वकैकध-

र्मोन्नायकाध्यवसायविशेषरूपत्वम्, अनेकधर्मकदम्बकोपेतवस्तुनो धर्मान्तरौदासीन्यपूर्वकैकधर्मेणावधारणात्मकाध्यवसायविशेषरूपत्वम्, प्रकृतवस्त्वंशग्राहीतरांशाप्रतिक्षेप्यध्यवसायविशेषरूपत्वं वा नयस्य लक्षणम् ।

स च द्वेधा, द्रव्यार्थिक-पर्यायार्थिकभेदात् । तत्र—

प्राधान्येन द्रव्यमात्रग्राह्यध्यवसायविशेषरूपत्वं द्रव्यार्थिकस्य लक्षणम् ।

उत्पाद-विनाशादिपर्यायमात्रग्राह्यध्यवसायविशेषरूपत्वं पर्यायार्थिकस्य लक्षणम् ।

तत्र द्रव्यार्थिकस्त्रेधा, नैगम-संग्रह-व्यवहारभेदात् । तत्र—

देशसमग्रग्राह्यध्यवसायविशेषरूपत्वम्, सामान्यविशेषोभयाऽभ्युपगमपराध्यवसायविशेषरूपत्वम्, प्रत्यक्षादिप्रमाणैर्घट-पटादिवस्तूनां पृथक्पृथक्करणनिमित्तावबोधानुसारिवचनविशेषरूपत्वम्, लोकार्थनिबोधविषयकुशलाध्यवसायविशेषरूपत्वम्, संकल्पयोनिरूपत्वम्, विचित्रपरिच्छेदकत्वं वा नैगमस्य लक्षणम् ।

सामान्यवस्तुसत्तासंग्राहकाध्यवसायविशेषरूपत्वम्, नैगमाद्युपगतार्थसंग्रहप्रवणत्वे सत्यध्यवसायविशेषरूपत्वं

---

१ संग्रहप्रवणत्वं नाम तन्नियतबुद्धिव्यपदेशजनकत्वम्, संगृहीतपिण्डितार्थाभ्युपगमपराध्यवसायविशेषरूपत्वं वा । संगृहीतम् = सामान्याभिमुखग्रहणगृहीतम्, महासामान्यं वा; पिण्डितं = विवक्षितैकजात्युपरागेण प्रतिपिपादयिषितम्, सामान्यविशेषरूपत्वं वेत्यर्थः ।

वा संग्रहस्य लक्षणम् ।

संग्रहगृहीतवस्तुनो भेदान्तरेण विभजनपराध्यवसायविशेषरूपत्वम्, सामान्येन संगृहीतार्थस्य भेदतोऽवहरणपराध्यवसायविशेषरूपत्वम्, लौकिकव्यवहारौपयिकाध्यवसायविशेषरूपत्वं वा व्यवहारस्य लक्षणम् ।

पर्यायार्थिकश्चतुर्धा, ऋजुसूत्र शब्द-समभिरूढैवंभूतभेदात् । तत्र—

प्रत्युत्पन्नग्राह्यध्यवसायविशेषरूपत्वमृजुसूत्रस्य लक्षणम्।

अतीतानागतसंबन्धाभावव्याप्त्योपगन्तृत्वम्, वर्तमानकालिकात्मीयवस्त्वभ्युपगमपराध्यवसायविशेषरूपत्वं वा प्रत्युत्पन्नग्राहित्वम् ।

शब्दवाच्यार्थपरिग्रहप्राधान्येऽपि लिङ्ग-वचन-कालभेदेन भिन्नार्थग्राह्यध्यवसायविशेषरूपत्वम्, भावमात्राभिधानप्रयोजकाध्यवसायविशेषरूपत्वं वा शब्दस्य लक्षणम् ।

व्युत्पत्तिभेदेन भिन्नानां घट-कुट-कुम्भादिपर्यायवाच्यार्थानां भेदाभ्युपगमपराध्यवसायविशेषरूपत्वम्, भावमात्राभिधानप्रयोजकत्वे सति पर्यायशब्दान्तरासंक्रमणाभ्युपगमपराध्यवसायविशेषरूपत्वम्, संज्ञाभेदनियतार्थभेदाभ्युपगमपराध्यवसायविशेषरूपत्वं वा समभिरूढस्य लक्षणम् ।

---

१ नाम-स्थापना-द्रव्य-भावरूपाणां चतुर्णां निक्षेपाणां मध्ये भावस्यैवानेनाभ्युपगमात्, न त्वृजुसूत्रेणेव सर्वेषामपीत्यर्थः ।

व्यञ्जनार्थविशेषान्वेषणपराध्यवसायविशेषरूपत्वम्, विशेषेण शब्दवाच्यार्थक्रियाग्राह्यध्यवसायविशेषरूपत्वम्, व्युत्पत्त्यर्थान्वयनियतार्थबोधकत्वाभ्युपगन्तृत्वं वैवंभूतस्य लक्षणम्।

॥ इति नयप्रकरणं समाप्तम् ॥

अथवा, औपशमिकादिभावपञ्चकान्यतमयुक्तत्वं जीवस्य लक्षणम्। भावपञ्चकस्य नामानि, लक्षणानि च यथा;-

मोहनीयकर्मोपशमप्रभवत्वम्, उदीर्णस्य क्षये सति अनुदीर्णस्य चोपशमे सति विपाक-प्रदेशवेदनरूपद्विविधस्याप्युदयस्य विष्कम्भेण निर्वृत्तिरूपत्वं वौपशमिकस्य लक्षणम्।

सर्वघातिस्पर्धकानामुदीर्णस्य क्षयेऽनुदीर्णस्य चोपशमे सति देशघातिस्पर्धकानामुदयरूपत्वम्, प्रदेशोदये सत्यपि अनुभागं समुद्दिश्योदीर्णस्य क्षयेऽनुदीर्णस्य च विष्कम्भितोदयरूपत्वं वा क्षायोपशमिकस्य लक्षणम्।

ज्ञानावरणादिकर्मक्षयप्रभवत्वं क्षायिकस्य लक्षणम्।

कर्मणां विपाकेनानुभवरूपत्वम्, कर्मविपाकाविर्भावप्रयोजनरूपत्वं वौदायिकस्य लक्षणम्।

जीवादीनां स्वरूपानुभवं प्रति प्रह्वीभावरूपत्वं पारिणामिकस्य लक्षणम्।

एतद्व्यतिरिक्तत्वेन वेदकाख्यं षष्ठं भावमपि केचिन्मन्यन्ते, तल्लक्षणं च अनन्तानुबन्धिमिथ्यात्वमिश्रपुञ्जानां

१ अभिमुखीभावरूपत्वम्।

क्षये सति सम्यक्त्वपुञ्जक्षयकरणचरमसमये चरमपुद्गलवेदनरूपत्वम्।

केचिच्चैनं क्षायोपशमिक एव भावेऽन्तर्भावयन्ति।

तत्रौपशमिको द्वेधा, सम्यक्त्व-चारित्रभेदात्। तत्र-

मिथ्यात्वानन्तानुबन्धिकर्मणां प्रदेशविपाकोदयविष्कम्भरूपत्वं सम्यक्त्वस्य, चारित्रमोहनीयोपशमप्रभवत्वं च चारित्रस्यौपशमिकस्य लक्षणम्।

क्षायिको नवधा, सम्यक्त्व-चारित्र-ज्ञान-दर्शन-दान-लाभ-भोगोपभोग-वीर्यभेदात्। तत्र–सप्तकक्षयप्रभवत्वं क्षायिकसम्यक्त्वस्य लक्षणम्।

चारित्रमोहनीयक्षयप्रभवत्वं क्षायिकचारित्रस्य लक्षणम्।

सकलज्ञेयग्राहित्वे सति समस्तज्ञानावरणक्षयप्रभवत्वं क्षायिकज्ञानस्य लक्षणम्।

सकलदर्शनावरणक्षयप्रभवत्वं क्षायिकदर्शनस्य लक्षणम्।

एकस्मादपि तृणाग्रात् त्रिभुवनविस्मयजनकं यदर्थिनो यथेप्सितप्रदातृत्वं (न जातुचित् प्रतिहन्तृत्वम्) तत् क्षायिकदानस्य लक्षणम्।

अशेषलाभान्तरायक्षयादचिन्त्यमाहात्म्यविभूत्याविर्भावकत्वं क्षायिकलाभस्य लक्षणम्।

समस्तभोगान्तरायक्षयप्रभवत्वे सति यथेष्टसुखानुभावकरूपत्वं क्षायिकभोगस्य लक्षणम्।

उपभोगान्तरायक्षयप्रभवत्वे सति विषयसंपदि सत्यां तथोत्तरगुणप्रकर्षात्तदनुभवरूपत्वं क्षायिकोपभोगस्य लक्षणम्, उपभोगान्तरायक्षयप्रभवत्वे सति च्छत्र-चामरादिप्रातिहार्यादीनां पुनः पुनरुपभुज्यमानत्वं वा ।

वीर्यान्तरायक्षयप्रभवाप्रतिहतशक्तिविशेषरूपत्वं क्षायिकवीर्यस्य लक्षणम् ।

क्षायिकदानादिपञ्चकस्य लक्षणान्तराण्यपि—

दानान्तरायात्यन्तक्षयप्रभवत्वं क्षायिकदानस्य लक्षणम् ।
लाभान्तरायात्यन्तक्षयप्रभवत्वं क्षायिकलाभस्य लक्षणम् ।
भोगान्तरायक्षयप्रभवत्वं क्षायिकभोगस्य लक्षणम् ।
उपभोगान्तरायक्षयप्रभवत्वं क्षायिकोपभोगस्य लक्षणम् ।
वीर्यान्तरायक्षयप्रभवत्वं क्षायिकवीर्यस्य लक्षणम् ।

क्षायोपशमिकोऽष्टादशविधः, ज्ञानाज्ञानदर्शनदानादिलब्धिसम्यक्त्वचारित्रसंयमासंयमभेदात् । तत्र—

मतिज्ञानावरणादिक्षयोपशमप्रभवत्वं क्षायोपशमिकज्ञानस्य लक्षणम् ।

कुत्सितज्ञानरूपत्वं तादृशाज्ञानस्य लक्षणम् ।

दर्शनावरणक्षयोपशमजन्यत्वं क्षायोपशमिकदर्शनस्य लक्षणम् ।

अन्तरायकर्मक्षयोपशमजन्यत्वं क्षायोपशमिकदानादिलब्धेर्लक्षणम् ।

अनन्तानुबन्धिमिथ्यात्वयोः सर्वघातिस्पर्धकानामुदीर्णस्य क्षयेऽनुदीर्णस्योपशमे च देशघातिनामुदये च सति जातं यत् तत्त्वार्थश्रद्धानं तद्रूपत्वम्, उदीर्णस्य क्षयेऽनुदीर्णस्य चोपशमे सति, अशुद्धपुञ्जस्य प्रदेशोदये सति शुद्धस्य तस्य विपाकोदयरूपत्वं वा क्षायोपशमिकसम्यक्त्वस्य लक्षणम्। द्वादशकषायाणामुदीर्णस्य क्षयेऽनुदीर्णस्योपशमे च संज्वलन-नोकषाययोर्यथासंभवमुदये च सति सावद्ययोगेभ्यः सर्वथानिवृत्तिपरिणामरूपत्वं क्षायोपशमिकचारित्रस्य लक्षणम्, अथवा, अन्तरायसर्वघातिस्पर्धकानामुदीर्णस्य क्षये, अनुदीर्णस्योपशमे च देशघातिस्पर्धकानामुदये च सति सर्वविरतिपरिणामरूपत्वं तत्।

कषायाष्टकसर्वघातिस्पर्धकानामुदीर्णस्य क्षयेऽनुदीर्णस्योपशमे च प्रत्याख्यानादिदेशघातिनां यथासंभवमुदये च सति देशतो विरतिलक्षणपरिणामरूपत्वं देशविरतेर्लक्षणम्।

अत्र क्षायोपशमिकभावलक्षणघटकस्पर्धकस्य अविभागपरिच्छिन्नकर्मप्रदेशानुभागप्रचयश्रेणिक्रमहानिवृद्धिरूपत्वं लक्षणम्। स्वरूपमप्यस्य संक्षेपतो यथा–एकसमयोपात्ते कर्मस्कन्धे येऽणवः सर्वाल्पिष्ठरसयुक्तास्तेऽपि च्छिद्यमानरसांशकैः सर्वजीवानन्तगुणान् रसांशान् प्रयच्छन्ति। एतेषां चाल्परसाणूनां समुदायः प्रथमवर्गणा। अन्याऽपे-

क्षयाऽत्र भूयांसोऽणवो रसास्तु स्तोकाः। तेषामणूनामेकेन रसांशेनाधिकानां समुदायो द्वितीया वर्गणा। इयं च वर्गणा आद्यवर्गणायाः परमाण्वपेक्षया हीना रसांशापेक्षयाऽधिका। एवं रसविभागभागानामेकैकस्य वृद्धितः परमाणूनां वर्गणा तावद् वाच्या यावदभव्येभ्योऽनन्तगुणा सिद्धानन्तांशमिता। तत्र सर्वाद्यवर्गणापेक्षया सर्वान्त्यवर्गणाणवोऽनन्तगुणाधिकान् रसभागान् प्रयच्छन्ति। तासां वर्गणानां समुदायः स्पर्धकमुच्यते।

औदयिकभावोऽप्येकविंशतिविधः, गतिकषायलिङ्गमिथ्यात्वाज्ञानासिद्धत्वासंयतलेश्याभेदात्। तत्र–

गतिनामकर्मोदयात् विवक्षितभवाद् भवान्तरगमनयोग्यत्वं गतेर्लक्षणम्।

चारित्रमोहोदयात् कलुषितभावरूपत्वं कषायस्य लक्षणम्।

वेदोदयजन्यत्वे सति मैथुनेच्छारूपत्वं लिङ्गस्य लक्षणम्।

अतत्त्वे तत्त्वबुद्धिरूपत्वं मिथ्यादर्शनस्य लक्षणम्।

मिथ्यात्वमोहोदये सति अतत्त्वज्ञानरूपत्वमज्ञानस्य लक्षणम्।

कर्मोदयप्रभवत्वमसिद्धस्य लक्षणम्।

अप्रत्याख्यानावरणीयादिकषायोदये सति सावद्ययोगाद् विरत्यभावरूपत्वमसंयतस्य लक्षणम्।

मनोयोगपरिणामजन्यत्वं लेश्याया लक्षणम्, कृष्णादिद्रव्यसाचिव्यादात्मनः परिणामविशेषरूपत्वं वा।

सा च षोढा, कृष्ण-नील-कापोत-तेजः-पद्म-शुक्लेश्याभेदात्। तत्र—

कृष्णद्रव्यसाचिव्याद् मूलाद् वृक्षोन्मूलनपरिणामतुल्यपरिणामरूपत्वं कृष्णलेश्याया लक्षणम्।

नीलद्रव्यसाचिव्यात् फलादनेच्छया महाशाखापातनपरिणामतुल्यपरिणामरूपत्वं नीललेश्याया लक्षणम्।

कापोतवर्णद्रव्यसाचिव्यात् फलादनेच्छया प्रशाखापातनपरिणामतुल्यपरिणामरूपत्वं कापोतलेश्याया लक्षणम्।

रक्तवर्णद्रव्यसाचिव्यात् फलादनेच्छया गुच्छसंदोहच्छेदनपरिणामतुल्यपरिणामरूपत्वं तेजोलेश्याया लक्षणम्।

पीतवर्णद्रव्यसाचिव्यात् फलादनेच्छया फलोच्छेदनपरिणामतुल्यपरिणामरूपत्वं पद्मलेश्याया लक्षणम्।

शुक्लवर्णद्रव्यसाचिव्यात् पतितफलादनेच्छया फलग्रहणपरिणामतुल्यपरिणामरूपत्वं शुक्ललेश्याया लक्षणम्।

पारिणामिकभावस्त्रेधा,—जीवभव्याभव्यत्वभेदात्। तत्र जीवस्य लक्षणमुक्तम्। भव्यत्वाभव्यत्वयोस्तूच्यते—सिद्धिगमनयोग्यत्वं भव्यत्वस्य, तद्विपरीतरूपत्वमभव्यत्वस्य लक्षणम्।

एतद्व्यतिरिक्ता अन्येऽपि बहवस्तस्य भेदाः सन्ति, तेऽपि वृत्त्यादिग्रन्थाद् विलोकनीयाः, विस्तरभयादत्र नोक्ताः।

स च जीवो द्वेधा, मुक्तसंसारिभेदात् । तत्र—

सर्वकर्मविनिर्मुक्तत्वं मुक्तत्वस्य लक्षणम् ।

मिथ्यात्वादिनिमित्तोपार्जितकर्मवशादात्मनो भवान्तरप्राप्तिरूपत्वं संसारित्वस्य लक्षणम् ।

पुनरपि जीवो द्विविधः। समनस्कः, अमनस्कश्च । तत्र पूर्वोक्तमनोलक्षणयुक्तः समनस्कः, तद्रहितोऽमनस्कः ।

संसारिणोऽपि द्विप्रकाराः, त्रस-स्थावरभेदात् । तत्र—

त्रसनामकर्मोदयजन्यसंप्राप्तवृत्तिविशेषरूपत्वं त्रसस्य, स्थावरनामकर्मोदयजन्यसंप्राप्तवृत्तिविशेषरूपत्वं च स्थावरस्य लक्षणम् ।

त्रसा द्विविधाः, गतित्रस-लब्धित्रसभेदात् ।

गतित्रसा अपि द्वेधा, तेजो-वायुभेदात् ।

लब्धित्रसाश्चतुर्विधाः, द्वि-त्रि-चतुष्पञ्चेन्द्रियभेदात् ।

स्थावरास्त्रिविधाः—पृथिव्यब्वनस्पतिभेदात् ।

अथेन्द्रियलक्षणमुच्यते—इन्द्रियाश्रयनिर्माणाङ्गोपाङ्गनामकर्मोदयेन जनिता याऽऽत्मनो लब्धिस्तद्रूपत्वमिन्द्रियस्य लक्षणम्, आत्मलिङ्गत्वं वा ।

तच्च द्विविधम्, द्रव्येन्द्रियम्, भावेन्द्रियं च ।

द्रव्येन्द्रियं द्विधा, निर्वृत्त्युपकरणभेदात् । तत्र—

निर्माणाङ्गोपाङ्गनामकर्मनिमित्तकत्वे सति कर्मविशेषसंस्कृतकर्णशष्कुल्यादिस्वरूपशरीरप्रदेशरूपत्वं निर्वृतीन्द्रियस्य लक्षणम् ।

निर्वृतीन्द्रियमपि द्विप्रकारम्, बाह्याभ्यन्तरभेदात्। तत्र प्रतिनियतचक्षुरादिसंस्थानेनावस्थितानां शुद्धात्मप्रदेशानां या वृत्तिस्तद्रूपत्वमाभ्यन्तरनिर्वृतेर्लक्षणम्।

तेष्वेवात्मप्रदेशेषु वर्धकीस्थानीयपुद्गलविपाकिनिर्माण-नामकर्मणा रचितत्वे सतीन्द्रियव्यपदेशभाग् यः प्रतिनियतसंस्थानवान् कर्णशष्कुल्याद्याकारविशेषस्तद्रूपत्वं बाह्यनिर्वृतेर्लक्षणम्।

द्विरूपाया अपि निर्वृतेर्यत्कर्तृकोपकारस्तद्रूपत्वम्, खड्गस्थानीयाया बाह्यनिर्वृतेर्या तद्धारासमानस्वच्छतरपुद्गलात्मिका आन्तरनिर्वृतिस्तस्याः शक्तिविशेषरूपत्वम्, निर्वर्तितस्यानुग्रहानुपघाताभ्यामुपकारकारित्वं वोपकरणेन्द्रियस्य लक्षणम्। एतदपि निर्वृतीन्द्रियमिव बाह्याभ्यन्तरभेदतो द्विविधम्।

भावेन्द्रियमपि द्विधा, लब्ध्युपयोगभेदात्। तत्र—

श्रोत्रादिविषयकं यज्ज्ञानं तदावरणीयकर्मणो यः क्षयोपशमविशेषस्तद्रूपत्वम्, गतिजात्यादिनामकर्मनिमित्तकत्वे सति तदावरणीयकर्मक्षयोपशमजनितत्वम्, यन्निमित्तादात्मा द्रव्येन्द्रियनिर्वृतिं प्रति व्यापारं करोति तद्रूपत्वं वा लब्धीन्द्रियस्य लक्षणम्।

स्वस्वलब्ध्यनुसारेण विषयेषु य आत्मनो व्यापारविशेषस्तद्रूपत्वमुपयोगेन्द्रियस्य लक्षणम्।

तानि चेन्द्रियाणि पञ्चधा, श्रोत्र-चक्षु-घ्राण-रसन-स्पर्शनभेदात्। तत्र-

कदम्बपुष्पाभमांसगोलकरूपत्वं श्रोत्रेन्द्रियस्य लक्षणम्

मसूरधान्यसमानाकृतिरूपत्वं चक्षुरिन्द्रियस्य लक्षणम्।

अतिमुक्तकपुष्पसमानाकृतिरूपत्वं घ्राणेन्द्रियस्य लक्षणम्

क्षुरप्रसमानसंनिवेशरूपत्वं रसनाया लक्षणम्।

विविधाकृतिरूपत्वं स्पर्शनेन्द्रियस्य लक्षणम्।

पञ्चेन्द्रिया द्विधा—संज्ञ्यसंज्ञिभेदात्। तत्र—

सुदीर्घातीतार्थस्मरणशीलत्वे सति 'कथं नु नाम कर्तव्यम्' इत्यागाम्यर्थचिन्तनप्रयोजकत्वं संज्ञिनो लक्षणम्।

तद्भिन्नत्वं चासंज्ञिनो लक्षणम्।

जीवस्य गतिर्द्वेधा—ऋजु-वक्रभेदात्। तत्र—

एकसामयिकगतिमत्त्वमृजुगतेर्लक्षणम्।

देहान्तरोपादानाय परभवं प्रस्थितानां जन्तूनां कुटिलगमनरूपत्वम्, शरीरान्तरानिमित्तभूतभवान्तरवक्रगमनरूपत्वं वा वक्रगतेर्लक्षणम्।

तद्भवसिध्यमानस्य जीवस्य ऋज्वी एव गतिः, अन्येषां तु देश-कालादिकमपेक्ष्य भजना[1]।

वक्रगतिप्रस्थितानां जन्तूनां कार्मणशरीरेणैव सह संबन्धः, न शेषशरीर-वाग्-मनोव्यापारैरिति। कर्मकृतम्, कर्मणो विकारः, कर्मणां समूहो वा कार्मणम्। साक्षात् सुख-

१ भजना=विकल्पः=ऋजुर्वक्रगतिर्वेत्यर्थः।

दुःखाद्युपभोगरहितत्वं कार्मणस्य लक्षणम्।

जीवानां संसरणं द्वेधा—देशान्तर-भावान्तरप्राप्ति-भेदात्। तत्र—

ये जीवाः पूर्वशरीरपरित्यागपूर्वकं देशान्तरं गत्वा जन्मान्तरं प्राप्नुवन्ति तेषां देशान्तरप्राप्तिरूपं संसरणम्। ये पुनर्मृताः सन्तः स्वशरीर एव कृम्यादिभावेनोत्पद्यन्ते तेषां भावान्तरप्राप्तिरूपं संसरणम्।

जीवानां गतिरनुश्रेणिर्भवति, न विश्रेणिः। तत्राकाशप्रदेशानुश्रेणिरूपेण जीव-पुद्गलानां या गतिस्तद्रूपत्वमनुश्रेणिगतेर्लक्षणम्, आकाशप्रदेशपङ्क्त्यनुसारेण गमनरूपत्वं वा।

त्रसजीवानां द्विविग्रहपर्यन्तैव गतिः। विग्रहो नाम वक्रता = कुटिलता, तत्प्रधाना गतिर्वक्रगतिः। तत्रैकविग्रहा द्वैसामयिकी, द्विविग्रहा तु त्रैसामयिकी। स्थावराणां त्वेकविग्रहादिचतुर्विग्रहपर्यन्ता गतिः।

अत्रेदं ध्येयम्—त्रसानां निश्चयनयानुसारेणैकविग्रहायां द्विसामयिक्यामप्येकोऽनाहारकसमयः, व्यवहारानुसारेण तु उभयत्राप्याहारोऽस्त्येव। द्विविग्रहलक्षणत्रिसामयिक्यां तु द्वावनाहारकसमयौ निश्चयनयमते, व्यवहारनये त्वेकसमयोऽनाहारकः। एवं त्रिविग्रहायां निश्चयेन त्रयः समया अनाहारकाः, मतान्तरे द्वौ। चतुर्विग्रहायां चत्वारः,

व्यवहारनये त्रयश्चेति । तत्रौदारिकादिपुद्गलानामादान-रूपत्वमाहारस्य लक्षणम् ।

स चाहारस्त्रिविधः- ओजो-लोम-कावलिकभेदात् । तत्र-

तैजस-कार्मणयोगेनौदारिकादिशरीरयोग्यपुद्गलानामादानरूपत्वमोजआहारस्य लक्षणम् ।

त्वगिन्द्रियादिद्वारा शरीरोपष्टम्भकपुद्गलादानरूपत्वं लोमाहारस्य लक्षणम् ।

मुखे कवलनिक्षेपरूपत्वं कावलिकस्य लक्षणम् ।

तादृशाहाराभावरूपत्वमनाहारस्य लक्षणम् । तद्वांश्चानाहारकः ।

जन्म त्रेधा— संमूर्च्छिम-गर्भोपपातभेदात् । तत्र—

गर्भसामग्रीं विना समुद्भूतस्वरूपत्वं संमूर्च्छिमस्य लक्षणम्, लोकत्रये यथायोगं देहावयवविरचनरूपत्वं वा ।

शुक्रशोणितसंमीलनाधारप्रदेशवत्त्वं गर्भस्य लक्षणम् ।

क्षेत्रप्राप्तिमात्रनिमित्तकं यज्जन्म तद्रूपत्वम्, गर्भसंमूर्च्छिमप्रकारराहित्येन जायमानत्वं वोपपातजन्मनो लक्षणम् ।

जन्म योनिद्वारा भवतीति तल्लक्षण-विधानानि प्रतिपाद्यन्ते । तत्र-

तैजस-कार्मणशरीरवन्तो जन्तव औदारिकादिशरीरयोग्यस्कन्धसमुदायेन यत्र स्थाने युज्यन्ते तादृक्स्थानरूपत्वं योनेर्लक्षणम् ।

सा त्रेधा, संवृत-विवृत-मिश्रभेदात् । तत्र—

दिव्यशय्यादिवद् वस्त्राद्यावृतस्थानरूपत्वं संवृतयोनेर्लक्षणम्, जन्तूत्पत्त्याधारवत्त्वे सत्यनुपलक्ष्यमाणस्थानविशेषरूपत्वं वा।

जन्तूत्पत्त्याधारवत्त्वे सति स्पष्टमुपलक्ष्यमाणस्थानविशेषरूपत्वं विवृतयोनेर्लक्षणम्।

बहिर्दृश्यमप्यदृश्यमध्यं जन्तूत्पत्तिस्थानं मिश्रयोनेर्लक्षणम्।

पुनः सा योनिस्त्रिधा—सचित्ताचित्तमिश्रभेदात्। तत्र—

जीवप्रदेशैः सहान्योन्यानुगमस्वीकृतजीवदेहादिरूपं यज्जन्तूत्पत्तिस्थानं तत् सचित्ताया लक्षणम्, जीवप्रदेशैः संबन्धरूपत्वं वा।

शुष्ककाष्ठादिरूपं यज्जन्तूत्पत्तिस्थानं तत्, सर्वथा जीवप्रदेशसंबन्धरहितत्वं वाऽचित्ताया लक्षणम्।

उभयस्वभावरूपत्वं मिश्रयोनेर्लक्षणम्।

यद्वा ये शुक्रशोणितपुद्गला योन्यात्मसात्कृतास्ते सचित्ताः, परेऽचित्ताः, तादृशोभयरूपा मिश्राः। अथवा, शुक्रमचेतनम्, शोणितं सचेतनम्, तदुभयं मिश्रमिति।

पुनरपि सा त्रेधा—शीतोष्णमिश्रभेदात्। तत्र—

शीतस्पर्शवत्त्वे सति जन्तूत्पत्तिस्थानरूपत्वं शीतयोनेर्लक्षणम्।

उष्णस्पर्शवत्त्वे सति जन्तूत्पत्तिस्थानरूपत्वमुष्णयोनेर्लक्षणम्।

शीतोष्णपरिणामवत्त्वे सति जन्तूत्पत्तिस्थानरूपत्वं मिश्रयोनेर्लक्षणम् ।

पुनरपि सा त्रिधा—कूर्मोन्नत-वंशीपत्र-शङ्खावर्तयोनि-भेदात् । तत्र—

कूर्मपृष्ठमिवोन्नतिमज्जन्तूत्पत्तिस्थानं कूर्मोन्नतयोनेर्लक्षणम् ।

संयुक्तवंशीपत्रद्वयाकृतिसमानाकृतिमत्त्वे सति जन्तूत्पत्तिस्थानरूपत्वं वंशीपत्रयोनेर्लक्षणम् ।

शङ्ख इवावर्तरूपत्वे सति जन्तूत्पत्तिस्थानरूपत्वं शङ्खावर्तयोनेर्लक्षणम् ।

गर्भजन्म त्रेधा—जरायु-अण्ड-पोतजभेदात् । तत्र—

जालवत् प्राणिपरिवरणरूपत्वे सति विततमांसशोणितरूपत्वं जरायोर्लक्षणम् । तत्र जातत्वं जरायुजस्य लक्षणम् ।

नख-त्वक्सदृशोपात्तकाठिन्ये सति शुक्रशोणितपरिवरणरूपं यद् मण्डलं तद्रूपत्वमण्डस्य, तत्र जातत्वं चाण्डजस्य लक्षणम् ।

पोते जातत्वं पोतजस्य लक्षणम् ।

नारक-देवानामुपपातरूपं जन्म । तत्र—

संवृतगवाक्षकल्पत्वेन स्थितेषु नारकोत्पत्तिस्थानरूपनिष्कुटेषु जायमानत्वं नारकोपपातस्य लक्षणम् ।

देवदूष्यान्तरितदेवशयनीये जायमानत्वं देवोपपातस्य लक्षणम्।

शरीराणि पञ्चधा—औदारिक-वैक्रियाहारक-तैजस-कार्मणभेदात्। तत्र—

उदारैः सर्वोत्कृष्टपुद्गलैर्जायमानत्वम्, औदारिकशरीरप्रायोग्यवर्गणाभिर्जायमानत्वम्, सर्वशरीरापेक्षया स्वभावतस्तुङ्गस्वरूपत्वं वौदारिकस्य लक्षणम्।

अणुत्व-महत्त्व-सूक्ष्मत्व-स्थूलत्वादिविविधक्रियाकरणसमर्थरूपत्वम्, वैक्रियप्रायोग्यवर्गणाद्रव्यैर्जायमानत्वं वा वैक्रियस्य लक्षणम्। तच्चौपपातिकलब्धिनिमित्तकत्वान्यतररूपत्वम्।

सूक्ष्मपदार्थसंशयव्यवच्छेदादिकारणपूर्वकं श्रुतकेवलिना कृतत्वे सति विशुद्धतरपुद्गलघटनात्मकत्वम्, शुभपरिणामवत्त्वे विशुद्धद्रव्योपचितत्वे च सति अव्याघातरूपत्वमाहारकशरीरस्य लक्षणम्।

उष्णतालिङ्गत्वे सति भुक्ताहारपरिणमनतेजोलेश्यादिसाधनसमर्थरूपत्वम्, तेजःशरीरप्रायोग्यवर्गणाद्रव्यैर्जायमानत्वं वा तैजसशरीरस्य लक्षणम्।

कर्मपरिपाकत आत्मप्रदेशैः सहान्योन्यानुगताः सन्तो ये पुद्गलाः शरीरतया परिणमन्ति तद्रूपत्वम्, कार्मणशरीरप्रायोग्यवर्गणाद्रव्यैर्जायमानत्वम्, इन्द्रियनिमित्तकश-

न्दाद्युपलब्धिविषयकोपभोगजननाभावरूपत्वं वा कार्मण-शरीरस्य लक्षणम्।

पुनरपि ते जीवास्त्रेधा, स्त्री-पुरुष-नपुंसकलिङ्गभेदात्। तत्र—

योनिमृदुतास्थैर्यमुग्धता-स्तनक्लीवता—पुंस्कामनाभिमतादिचिह्नवत्त्वं स्त्रीलिङ्गस्य लक्षणम्।

मेहन-खरता-दार्ढ्य-शौण्डीर्य-श्मश्रु-धृष्टतादिचिह्नवत्त्वं पुरुषलिङ्गस्य लक्षणम्।

मोहानलसुदीपितत्वे सति स्तन-श्मश्रु-केशादिभावाभावसमन्वितत्वं नपुंसकलिङ्गस्य लक्षणम्।

जीवानामायुर्द्वेधा, सोपक्रम-निरुपक्रमभेदात्। तत्र—

आगमोक्ताध्यवसानाद्यायुःक्षयकारणैर्बहुकालेन भोग्यं यदायुरल्पकालेन भुज्यते तद्रूपत्वम्, बन्धकाले शक्यापवर्तनस्वरूपशिथिलबन्धनेन यदायुर्बद्धं तद्रूपत्वं वा सोपक्रमस्य लक्षणम्[1]।

यद् गाढनिकाचनेन बन्धकालेऽशक्यापवर्तनस्वरूपक्रमवेद्यफलकमायुर्बद्धं तद्रूपत्वं निरुपक्रमस्य लक्षणम्[2]।

पुनरपि स जीवश्चतुर्विधः, नरक-तिर्यग्-मनुष्य-देवगतिभेदात्। तत्र—

---

१ अत्र पिण्डीकृतरज्जुदहनमुदाहरणम्। २ आयतीकृतरज्जुदहनमिह निदर्शनम्।

अशुभतराशुभतमलेश्यादिपरिणामवत्त्वे सति नरकगतिनामकर्मोदयरूपत्वं नरकगतेर्लक्षणम् ।

तिर्यग्गतिनामकर्मोदयरूपत्वं तिर्यग्गतेर्लक्षणम् ।

मनुष्यगतिनामकर्मोदयरूपत्वं मनुष्यगतेर्लक्षणम् ।

तत्र मनुष्या द्विविधाः, आर्य-म्लेच्छभेदात् । तत्र-

हिंसा-ऽसत्यादिहेयधर्माद् दूरीभवनशीलत्वमार्यस्य, तद्विपरीतस्वरूपवत्त्वं च म्लेच्छस्य लक्षणम् ।

आर्याश्च कर्मभूमिजा इति तल्लक्षणं निगद्यते—

सम्यग्दर्शनादिरूपमोक्षमार्गज्ञातृत्वोपदेष्टृत्वादीनामुत्पत्तिस्थानरूपत्वं कर्मभूमेर्लक्षणम् ।

प्रायशः शुभतरादिलेश्यादिपरिणामवत्त्वे सति देवगतिनामकर्मोदयरूपत्वं देवगतेर्लक्षणम् ।

देवाश्चतुर्विधाः, भवनपति-व्यन्तर-ज्योतिष्क-वैमानिकभेदात् । तत्र-

देवगतिनामकर्मोदये सति भवननिवासशीलत्वं भवनपतेर्लक्षणम् ।

देवगतिनामकर्मोदये त्रिविधप्रदेशेषु निवासशीलत्वे च सति अनियतगतिप्रचाररूपत्वं व्यन्तरस्य लक्षणम् ।

देवगतिनामकर्मोदये सति प्रकाशस्वभावरूपत्वं ज्योतिष्कस्य लक्षणम् ।

विमाने भवनशीलत्वं वैमानिकस्य लक्षणम् ।

भवनपति-वैमानिकनिकाययोर्दशधा देवाः सन्ति,

इन्द्र-सामानिक-त्रायस्त्रिंश-पार्षद्यात्मरक्षक-लोकपालानीक-प्रकीर्णकाभियोग्य-किल्विषकभेदात् । तत्र—

देवगतिनामकर्मोदये सत्याधिपत्यशक्तिरूपत्वमिन्द्रस्य लक्षणम् ।

देवगतिनामकर्मोदये सत्याधिपत्याभावे च सतीन्द्रसमानर्द्धिकत्वं सामानिकस्य लक्षणम् ।

इन्द्रस्यैव मन्त्रि-पुरोहितस्थानाधिरूढत्वं त्रायस्त्रिंशस्य लक्षणम् ।

तस्यैव वयस्यस्थानीयत्वं पार्षद्यस्य लक्षणम् ।

तस्यैव आरक्षिकार्थचरस्थानाधिरूढत्वं लोकपालस्य लक्षणम् ।

तस्यैव शिरोरक्षस्थानाधिरूढत्वमात्मरक्षस्य लक्षणम् ।

तस्यैव सेनास्थानाधिरूढत्वमनीकस्य लक्षणम् ।

तस्यैव पौरजनस्थानाधिरूढत्वं प्रकीर्णकस्य लक्षणम् ।

तस्यैव दासस्थानाधिरूढत्वमाभियोग्यस्य लक्षणम् ।

तस्यैवान्त्यजस्थानाधिरूढत्वं किल्विषिकस्य लक्षणम् ।

व्यन्तर-ज्योतिष्कयोर्लोकपाल-त्रायस्त्रिंशवर्जा अष्टधा ।

भवनपति-व्यन्तर-ज्योतिष्क-सौधर्मेशानपर्यन्ता देवाः कायेन प्रवीचारं कुर्वन्ति । तत्र प्रवीचारो नाम मैथुनव्यवहाररूपत्वम् । शेषेषु द्वयोर्द्वयोः स्पर्श-रूप-शब्द-मनोविषयकप्रवीचारा भवन्ति ।

स्पर्शविषयकमैथुनव्यवहाररूपत्वं स्पर्शप्रवीचारस्य लक्षणम् ।

रूपविषयकमैथुनव्यवहाररूपत्वं रूपप्रवीचारस्य लक्षणम् ।

शब्दविषयकमैथुनव्यवहाररूपत्वं शब्दप्रवीचारस्य लक्षणम् ।

मनोविषयकमैथुनव्यवहाररूपत्वं मनःप्रवीचारस्य लक्षणम् ।

परिशिष्टा देवाः शब्दादिविषयकमैथुनव्यवहाररहिता भवन्ति ।

पुनरपि जीवाः पञ्चधा, इन्द्रियभेदात् ।

षोढा अपि जीवाः, पृथिवीकायादिभेदात् ।

सप्तधा अपि ते, सूक्ष्म-बादरैकेन्द्रिय-द्वि-त्रि-चतुरसंज्ञि-संज्ञिपञ्चेन्द्रियभेदात् ।

अष्टधा अपि जीवाः, रसजादिभेदात् ।

इत्येवमनेके भेदाः सन्ति, ते तु ग्रन्थान्तराद् विलोकनीयाः ॥

इति ए-एम्-ए-एस्-वीत्युपाधियुक्त-शास्त्रविशारद-जैनाचार्य-श्रीमद्विजयधर्मसूरीश्वरचरणारविन्दभृङ्गायमाणेन न्यायतीर्थ-न्यायविशारदोपनामधारिणा प्रवर्तकश्रीमङ्गलविजयेन विरचिते श्रीजैनतत्त्वप्रदीपे जीवाधिकारवर्णननामा

प्रथमोऽधिकारः समाप्तः ॥



# अजीवाधिकारः ।

अथाजीवाधिकारः प्ररूप्यते, तत्र—

उपयोगाभाववत्त्वमजीवसामान्यस्य लक्षणम् ।

स च पञ्चधा, धर्माधर्माकाशपुद्गलास्तिकायकालभेदात् । एतं एव जीवेन सह षड् द्रव्याणीति कथ्यन्ते, इति प्रथमतो पदार्थसामान्यलक्षणनिरूपणपूर्वकं तेषामपि लक्षणमुच्यते ।

उत्पाद-व्यय-ध्रौव्ययुक्तत्वं पदार्थसामान्यस्य लक्षणम् । तत्र-

स्वजातित्वापरित्यागपूर्वकपरिणामान्तरप्राप्तिरूपत्वमुत्पादस्य लक्षणम् ।

स्वजातित्वापरित्यागपूर्वकपूर्वपरिणामविगमरूपत्वं व्ययस्य लक्षणम् ।

स्वजातिस्वरूपेण व्ययोत्पादाभावरूपत्वम्, स्वजातित्वरूपेणानुगतरूपत्वं वा ध्रौव्यस्य लक्षणम् ।

स्वभावतः संचरतां जीवपुद्गलानां गमनागमनादिचेष्टासु भाषामनोवचःकाययोगादिषु मीनानां पानीयमिव यदापेक्षित[1]कारणं तद्रूपत्वम्, गतिरूपेण परिणतानां

---

१ आपेक्षितकारणम्=साधारणनिमित्तम् ।

जीव-पुद्गलानां गतौ यदापेक्षितकारणं तद्रूपत्वं वा धर्मास्तिकायस्य लक्षणम्।

स्वभावतः स्थितिमतां जीवपुद्गलानां, पान्थानां छायास्थलमिव शयन-निषदन-स्थानालम्बनादिषु, यत् साधारणनिमित्तं तद्रूपत्वम्, स्थितिरूपेण परिणतानां जीवपुद्गलानां यत् साधारणनिमित्तं तद्रूपत्वं वाऽधर्मास्तिकायस्य लक्षणम्।

अवगाहमानानां पदार्थानामवकाशे शर्करा-वह्नयोर्दुग्धायोगोलकवद् हेतुताधारकत्वमाकाशस्य लक्षणम्।

ग्रहण-धारणादिपरिणामवत्त्वे सति रूपादिमत्त्वम्, रूपादिसंस्थानपरिणामरूपत्वं वा पुद्गलास्तिकायस्य लक्षणम्।

पुद्गलं विना सर्वद्रव्याण्यरूपीणि नित्यावस्थितानि च। तत्र नित्यत्वं नाम परिणामान्तरापत्तौ सत्यामप्यन्वयिनोंशादप्रच्युतरूपत्वं कदाचिदपि पञ्चभूतार्थं न व्यभिचरतीत्येवंरूपत्वमवस्थितस्य लक्षणम्।

जीव-पुद्गलौविना निष्क्रियाण्यपि तानि सन्ति। तत्र क्रियावत्त्वं नाम कर्मबन्धनिबन्धनचेष्टाविशेषरूपत्वम्, निमित्तद्वयापेक्षत्वे सति द्रव्यस्य देशान्तरप्राप्तिहेतुभूतपर्यायविशेषरूपत्वं वा। तदभाववत्त्वं निष्क्रियत्वम्।

द्रव्यं द्वेधा, अद्रव्यं[1] द्रव्यम्, अनेकद्रव्यं[2] द्रव्यं च ।

गुण-पर्यायवत्त्वं द्रव्यसामान्यस्य लक्षणम् ।

सहभावित्वं गुणस्य लक्षणम् ।

क्रमभावित्वं पर्यायस्य लक्षणम् ।

ननु हस्तिशरीरवर्त्ती जीवो यदा कर्मवशात् कीटिका-शरीरं गृह्णाति तदा तावन्मात्रशरीरस्थानामात्मप्रदेशानाम-त्याल्पतरशरीरे कथं समावेशः ? इत्याशङ्कायामुच्यते—

प्रदेशसंहारविसर्गाभ्यां सङ्कोचविकाशौ भवतः ।

कार्मणशरीरनिमित्तवशाद् गृहीतसूक्ष्मनामकर्मानुवर्त्त-नरूपत्वम्, कर्मवशाद् गृहीतसूक्ष्मनामकर्मानुसरणरूपत्वं वा प्रदेशसंहारस्य लक्षणम् ।

कार्मणशरीरनिमित्ताद् वादरनामकर्मानुसरणरूपत्वं प्रदेशविसर्गस्य लक्षणम् ।

जीवपुद्गलानां गतौ धर्मास्तिकायस्योपकारः । तेषा-मेव स्थितौ तावदधर्मास्तिकायस्योपकारः ।

अवगाह्यमानपदार्थानामवगाहनलक्षणक्रियायामाका-शस्योपकारः ।

शरीरवाङ्मनःप्राणापानद्वारा पुद्गलानामुपकारः ।

---

१ यस्य समानजातीयद्रव्यान्तरं नास्ति तदद्रव्यं द्रव्यमुच्यते ।

२ यस्य समानजातीयद्रव्यान्तरं समस्ति तदनेकद्रव्यं द्रव्यं कथ्यते, यथा जीव-पुद्गलौ ।

तत्र शरीरमनसो लक्षणं कथितम्। भाषादीनां तु निगद्यते। तत्रापि भाषावाग्योगयोर्लक्षणद्वारा पार्थक्यं प्रदर्श्यते;—

भाषाप्रवर्त्तकत्वे सति जन्तुप्रयत्नविशेषरूपत्वं वाग्योगस्य लक्षणम्।

भाषात्वेनापादितभाषार्हद्रव्यसन्ततिरूपत्वं लक्षणं भाषायाः।

कौष्ठ्यप्रभवोच्छ्वासलक्षणो यो वायुस्तद्रूपत्वं प्राणस्य लक्षणम्। अत्र च लक्षणघटकोच्छ्वासस्यापि लक्षणमुच्यते—

उच्छ्वासत्वेनापादिता या द्रव्यसन्ततिस्तस्याः पुनर्व्यापारकरणशीलत्वमुच्छ्वासस्य लक्षणम्।

अन्तः क्रियमाणो यो वाह्यवायुस्तस्य पुनर्निःश्वासरूपत्वमपानस्य लक्षणम्।

सुखदुःखजीवितमरणद्वाराऽपि पुद्गलानामुपकारो भवति।

सातावेदनीयोदयादात्मनः प्रसन्नतानुरूपत्वं सुखस्य लक्षणम्।

असातावेदनीयोदयादात्मनः संक्लेशरूपत्वं लक्षणं दुःखस्य।

आयुर्नामकर्मोदयात् प्राणस्याव्युपरमरूपत्वं जीवितस्य लक्षणम्।

आयुर्नामकर्मोच्छेदात् प्राणस्य व्युपरमरूपत्वं मरणस्य लक्षणम्।

जीवस्य स्वस्वामिभावादिसंवन्धद्वारा परस्परमुपकारो भवति।

वर्तनापरिणामक्रियापरत्वापरत्वादिद्वारा कालस्योपकारो भवति।

सादिसान्तादिलक्षणस्थितौ येन केनचित् प्रकारेण द्रव्याणां यद्वर्त्तनं तद्रूपत्वं वर्तनाया लक्षणम्।

अथवा स्वयमेव वर्तनशीलानां पदार्थानां प्रयोजकत्वम्। अथवा प्रतिद्रव्यपर्यायमन्तर्णीतैकसमयस्वसत्तानुभूतिरूपत्वम्।

द्रव्याणां प्रयोगाविस्रसाजन्यनूतनत्वपुरातनत्वादिरूपा या परिणतिस्तद्रूपत्वं परिणामस्य लक्षणम्। अथवा द्रव्यस्य स्वजात्यपरित्यागेन परिस्पन्देतरप्रयोगजन्यपर्यायस्वभावरूपत्वम्। अनवस्थितादिकार्थानां भूतत्व-वर्त्तमानत्व-भविष्यत्त्वविशिष्टचेष्टाविशेषरूपत्वं क्रियाया लक्षणम्।

पूर्वभावित्वं परस्य लक्षणम्।

पश्चाद्भावित्वमपरस्य लक्षणम्।

गतिस्त्रेधा, प्रयोगविस्रसामिश्रभेदात्।

जीवपरिणामसंप्रयुक्तशरीराहारवर्णगन्धरससंस्थानविषयकत्वं प्रयोगगतेर्लक्षणम्।

अभ्रेन्द्रधनुःपरिवेषादिरूपविचित्रसंस्थानविषयकत्वं विस्रसागतेर्लक्षणम्।

प्रयोगविस्रसाभ्यां जीवप्रयोगसहचरिताचेतनद्रव्य-परिणामकुम्भस्तम्भादिविषयकत्वं मिश्रगतेर्लक्षणम्।

विशिष्टमर्यादाऽवच्छिन्नोर्ध्वाधोऽर्धतृतीयद्वीपाभ्यन्तर्व-र्तिजीवादिद्रव्यैः स्वत एव परिणमद्भिरपेक्षाकारणतयाऽसौ कालः कल्प्यते, बलाकाप्रसवे गर्जितध्वनिवत्। अतोऽसौ कालोऽपेक्षाकारणं, न तूपादानादि कारणम्।

पूर्वकथितलक्षणं पुद्गलद्रव्यं चतुर्धा, स्कन्ध-देश-प्रदेश-परमाणुभेदात्।

प्रायो ग्रहणदानादिव्यापारसमर्थरूपत्वं स्कन्धस्य लक्षणम्, अथवा वर्णादिमत्त्ववद्धत्वयोः सतोः सूक्ष्म-बादरपरिणामपरिणतिरूपत्वम्।

स स्कन्धो द्वेधा, सूक्ष्मबादरभेदात्।

चक्षुःस्पर्शादिमत्त्वे सति सूक्ष्मपरिणामपरिणतिरूपत्वं सूक्ष्मस्कन्धस्य लक्षणम्।

अष्टस्पर्शादिमत्त्वे सति बादरपरिणामपरिणतिरूपत्वं बादरस्कन्धस्य लक्षणम्।

स च स्कन्धो दशधा, शब्दबन्धसौक्ष्म्यस्थौल्यसंस्था-नभेदतमश्छायातपोद्द्योतभेदात्। लक्षणमपि तेषां क्रमेणो-च्यते।

विवक्षावशादन्वयव्यतिरेकाभ्यां प्रधानगुणभावतया सामान्यविशेषवतोऽर्थस्याभिधायकप्रत्यर्थनियतसंमतवर्णादिविभागवद्ध्वनिरूपत्वं लक्षणं शब्दस्य ।

बन्धस्तु त्रेधा, प्रयोग-विश्रसा-मिश्रभेदात् ।

जीवव्यापारघटितत्वे सति शरीरादिविषयकपरस्पराश्लेषरूपत्वं प्रयोगबन्धस्य लक्षणम् ।

विस्रसाबन्धो द्वेधा, साधनादिभेदात् ।

विद्युदुल्काग्नि-अभ्रेन्द्रधनुरादिविषयकविषमगुणविशेषपरिणतपरिणामप्रभवस्कन्धपरिणामरूपत्वमादिविस्रसाबन्धस्य लक्षणम् ।

धर्माधर्माकाशविमानमेर्वादिविषयकत्वमनादिविस्रसाबन्धस्य लक्षणम् ।

प्रयोगविस्रसाभ्यां जीवप्रयोगसहचरिताचेतनद्रव्यपरिणतस्तम्भकुम्भादिविषयकविषमगुणविशेषपरिणतपरिणामप्रभवस्कन्धपरिणामरूपत्वं लक्षणं मिश्रस्य ।

सौक्ष्म्यं द्वेधा, अन्त्यापेक्षिकभेदात् ।

परमाणुविषयकत्वमन्त्यसौक्ष्म्यस्य लक्षणम् ।

द्व्यणुकादिस्कन्धपरिणामापेक्षकत्वमापेक्षिकसौक्ष्म्यस्य लक्षणम् ।

स्थौल्यमपि द्वेधा, अन्त्यापेक्षिकभेदात् ।

अचित्तमहास्कन्धपरिणामरूपत्वमन्त्यस्थौल्यस्य लक्षणम् ।

आम्रामलक-वदरीफल-चणकादिविषयकत्वमापेक्षिक-स्थौल्यस्य लक्षणम्।

दीर्घह्रस्वाद्याकृतिविशेषरूपत्वं संस्थानस्य लक्षणम्।

एकत्वद्रव्यपरिणामविशेषरूपत्वं भेदस्य लक्षणम्।

दृष्टिप्रतिघातकारित्वे सति पुद्गलपरिणामरूपत्वं लक्षणं तमसः।

प्रकाशावरणनिमित्तकत्वे सति पुद्गलपरिणामरूपत्वं छायाया लक्षणम्।

तापस्वेदादिनिमित्तकत्वे सति उष्णस्पर्शादिरूपत्वमातपस्य लक्षणम्।

चन्द्रकान्तखद्योतादिविषयकत्वे सति मूर्त्तद्रव्यविकाररूपत्वमुद्द्योतस्य लक्षणम्।

तादृशस्कन्धस्यैवैकविभागकल्पनारूपत्वं देशस्य लक्षणम्।

तादृशदेशसंबन्धकत्वे सति अविभागभागविशेषकल्पनारूपत्वं प्रदेशस्य लक्षणम्।

वर्णादिमत्त्वे सति सकलभेदपर्यन्तवर्त्तित्वं परमाणोर्लक्षणम्। अथवा वर्णादिमत्त्वे सति परस्परासंयुक्तप्रदेशमात्ररूपत्वम्।

---

१ तच्च द्विविधम्; इत्थंभूतानित्थंभूतभेदात्।

२ स च पञ्चविधः, औत्करिक-चौर्णिक-खण्ड-प्रतरानुचटनभेदात्।

स्कन्धस्योत्पत्तिनिमित्तं भेदसंघातादयो भवन्ति। परमाणुनिमित्तं तु भेद एव।

स्नेहसौक्ष्म्यविगमे स्थितिक्षये च सति द्रव्यान्तरेण भेदे स्वभावगत्या द्व्यणुकादिस्कन्धभेदेनोपजायमानरूपत्वं भेदजन्याणोर्लक्षणम्।

पुनरपि स्कन्धो द्वेधा, चाक्षुषेतरभेदात्।

स्वत एव परिणतिविशेषरूपत्वे सति बादरत्वे च सति चाक्षुषपरिणामभाक्त्वे च सति भेदसंघाताभ्यां समुपजायमानत्वं चाक्षुषस्कन्धस्य लक्षणम्। अथवा भेदे सति अन्यसंघातान्तरसंयोगे सति सूक्ष्मपरिणामोपरमत्वे च सति स्थूलतया जायमानत्वम्।

पूर्वोक्ताद् विपरीतरूपत्वमचाक्षुषस्य लक्षणम्।

उत्पादव्ययध्रौव्ययुक्तत्वमित्यनेन पदार्थसामान्यस्य लक्षणमुक्तम्; तादृशलक्षणान्तरगतानामुत्पादादीनामपि लक्षणान्युक्तानि। अथवा लक्षणान्तरगतानां मध्ये ध्रौव्यस्य लक्षणं तु नित्यत्वलक्षणंकथनेनैव कथितम्। उत्पादव्यययोस्तु लोकप्रतीतत्वात् पूर्वं सामान्यत उक्तत्वाच्च विशेषतो नोच्यते। विशेषजिज्ञासायां तु किञ्चिदुच्यते, अर्पितानर्पितद्वाराप्युत्पादादीनां व्यवहारस्य सिद्धिर्भवति।

अनेकधर्मात्मकवस्तुनो विवक्षितेन केनचिद्धर्मेण प्रापितप्राधान्यरूपत्वमर्पितस्य लक्षणम्। अथवा किञ्चिद्वस्तु-

विशिष्टाभिधानार्पितत्वे सति सद्व्यवहारसाधकत्वम्। अथवा शब्दपरिप्रापितव्यवहाररूपत्वम् । मुख्यव्यवहाररूपत्वं वा ।

पूर्वोक्तलक्षणाद् विपरीतरूपत्वमनर्पितस्य लक्षणम् । अथवा गौणव्यवहाररूपत्वम् ।

अथ परस्परं विश्लिष्टानां परमाणूनां बन्धप्रतिपादनाय प्रकारः प्रदर्श्यते—

स्निग्धरूक्षत्वलक्षणगुणविशिष्टानां परमाणूनां बन्धो भवति । तत्र च स्निग्धरूक्षौ स्पर्शविशेषौ । अत्यल्पस्निग्धगुणयुक्तानां परमाणूनामत्यल्परूक्षगुणयुक्तपरमाणुभिः सह परस्परं बन्धो न भवति—एकगुणरूक्षाणां परमाणूनामेकगुणस्निग्धपरमाणुभिः सह बन्धो न भवतीत्यत्र तात्पर्यम् ।

एवं तुल्यगुणस्निग्धस्य तुल्यगुणस्निग्धेन सह, एवं तुल्यगुणरूक्षस्य तुल्यगुणरूक्षेण सहापि बन्धो न भवति। तथा च तुल्यगुणस्निग्धस्य तुल्यगुणस्निग्धेन सह बन्धो नास्ति । कुतः ? परस्परं परिणतरूपशक्त्यभावात्, तुल्यबलविशिष्टमल्लद्वयान्योन्याभिघातवत् । एवमेकगुणस्निग्धोऽपि नैकगुणस्निग्धैः सह बन्धमाप्नोति । तथा द्विगुणादिस्निग्धाः परमाणवो द्विगुणादिस्निग्धैः समगुणैरनन्तपर्यवसानैः स्निग्धगुणविशिष्टपरमाणुभिरपि न बध्यते। एवं रूक्षेपि ज्ञातव्यम् ।

गुणवैषम्ये सति सदृशानां गुणद्वयाधिकानां बन्धो भवति। बन्धे च सति समगुणस्य समगुणपरिणामो भवति। हीनस्य चाधिकगुणपरिणामो भवति।

तत्र परिणामो नाम भावान्तरापादकत्वं पारिणामिकस्य। तथा च स्वगतस्नेहगुणः कदाचिद् रूक्षतया परिणमति। एवं स्वगतरूक्षगुणः कदाचित् स्निग्धतया परिणमति। गुणसाम्ये तु सदृशानां प्रतिषेधः। इमौ तु विसदृशौ। एको द्विगुणस्निग्धोऽन्यो द्विगुणरूक्षः सन् परस्परं बन्धमाप्नोति। स्नेहरूक्षयोश्च भिन्नजातीयत्वान्नास्ति सादृश्यम्।

तत्र गुणानां लक्षणे तु—

द्रव्याश्रयत्वे सति निर्गुणत्वं गुणसामान्यस्य लक्षणम्। अयं भावः—स्थित्यंशो द्रव्यं, स एव आश्रयो येषां परिणामविशेषाणां गुणानां ते द्रव्याश्रयाः; अर्थात् परिणामविशेषगुणानां परिणतिकारणरूपं द्रव्यमुच्यते। एषु ज्ञानशुक्लादिगुणेषु नान्ये गुणाः सन्तीति निर्गुणास्ते गुणा भवन्तीति च द्रव्याद्व्यतिरेके सति तदुपपद्यते। गुणगुणिनोश्च भेदस्तु नास्त्येव सर्वथा, जैनमते सकलस्य वस्तुनो भेदाभेदरूपत्वात्।

यदा तु द्रव्यमेव तथा परिणतं ज्ञानाद्यात्मना तदा

१ द्विगुणाद्यधिकस्निग्धस्य द्विगुणाद्यधिकस्निग्धेन सह द्विगुणाद्यधिकरूक्षस्य च द्विगुणाद्यधिकरूक्षेण सह बन्धो भवतीत्यत्र तात्पर्यम्।

तादात्म्याद् गुणानां भिन्नं स्वरूपं नास्त्येव । तथा च शुद्धद्रव्यार्थिकनयादेशादन्यतम एव गुणः । पर्यायार्थिकनयविवक्षायां तु गुणः स्यात्, प्रधानत्वात् पर्यायस्य, इत्याशङ्कायां समाधीयते — सतां गुणानां निर्गुणत्वं चिन्त्यते । अत्यन्तशुद्धद्रव्यास्तिकपक्षे गुणा एव न सन्ति, कुतोऽन्यतमत्वम् ? उच्यते—न सन्तीत्येतदयुक्तम्, सन्ति गुणाः ; किन्तु द्रव्यादव्यतिरिच्यमानरूपास्ते । यदा द्रव्यं शुक्लाकारेण परिणतं भवति तदा कृष्णाकारपरिणतं नास्तीति स्फुटं निर्गुणत्वम् । पदार्थानां च तद्भावरूपः परिणामो भवति ।

जीवादिपदार्थानामवस्थान्तरापत्तिरूपत्वं परिणामस्य लक्षणम् । स्वभावः स्वतत्त्वरूपं वा ।

स च परिणामो द्वेधा, अनादिसादिभेदात् । तत्र रूपिषु आदिमान्, धर्मादिद्रव्येषु अनादिमान् ।

योगोपयोगस्वरूपो जीवस्य परिणामो भवति ।

तत्र पुद्गलसंबन्धादात्मनो वीर्यविशेषरूपत्वं योगस्य लक्षणम् । उपयोगस्तूक्त एवेति शम् ।

इति ए-एम-ए-एस-वीत्युपाधियुक्त-शास्त्रविशारद-जैनाचार्य—श्रीमद्विजयधर्मसूरीश्वरचरणारविन्दभृङ्गायमाणेन न्यायतीर्थ-न्यायविशारदोपाधियुक्तेन प्रवर्तकमङ्गलविजयेन विरचिते जैनतत्त्वप्रदीपाख्ये ग्रन्थेऽजीवाधिकारवर्णननामा द्वितीयोऽधिकारः समाप्तिमगमत् ।



अथ

# आस्रवाऽधिकारः ।

---

अथास्रवतत्त्वं प्रतिपाद्यते। कायवाङ्मनःकृतशुभाशुभकर्मागमनरूपत्वमास्रवस्य लक्षणम् । तथा च कायवाङ्मनोद्वारा आत्मनः कर्मयोगो भवति। तत्र कर्मयोगो नाम कर्मणो योगः संबन्धः कर्मयोगः। कर्मणो लक्षणं तु सर्वकर्मप्ररोहकारणकत्त्वं कार्मणस्य। योगस्य तु वीर्यान्तरायक्षयोपशमजनितेन पर्यायेणात्मनः संबन्धरूपत्वं लक्षणम्।

स च योगस्त्रेधा; कायिक-वाचिक-मानसिकभेदात्। अत्र च काययोगघटककायस्य लक्षणकथनपूर्वकं त्रयाणामपि योगानां लक्षणमुच्यते;—

पुद्गलघटितत्वे सति आत्मनो निवासरूपत्वं कायस्य लक्षणम्।

गमनागमनादिक्रियाहेतुकत्वे सति कायात्मप्रदेशपरिणामरूपत्वं काययोगस्य लक्षणम्।

भाषायोग्यपुद्गलात्मप्रदेशपरिणामरूपत्वं वाग्योगस्य लक्षणम्।

मननयोग्यपुद्गलात्मप्रदेशपरिणामरूपत्वं मनोयोगस्य लक्षणम्।

स चास्रवो द्वेधा, शुभाशुभभेदात्। मैत्र्यादिवासना-वासितमनःकृतशुभकर्मागमनरूपत्वं मानसिकशुभास्रवस्य लक्षणम्।

कषायविषयाक्रान्तमनःकृताशुभकर्मागमनरूपत्वं मानसिकाशुभाश्रवस्य लक्षणम्।

सम्यग्ज्ञानाश्रितवचःकृतशुभकर्मागमनरूपत्वं शुभवाचिकाश्रवस्य लक्षणम्।

पूर्वोक्तविपरीतवचःकृताशुभकर्मागमनरूपत्वं वाचिकाशुभाश्रवस्य लक्षणम्।

सुगुप्तशरीरे सति शरीरिकृतशुभचेष्टाविशेषात् शुभकर्मागमनरूपत्वं कायिकशुभाश्रवस्य लक्षणम्।

सततारम्भिजन्तुघातकशरीरिकृताऽशुभकर्मागमनरूपत्वं कायिकाऽशुभाश्रवस्य लक्षणम्।

अत्र च अशुभकर्मकारणानि निगद्यन्ते, कषाय-विषय-योग-प्रमादाऽविरति-मिथ्यात्वा-ऽऽर्त-रौद्रादीनि अशुभकर्मकारणानि।

अत एव योगोऽपि द्वेधा, शुभाशुभभेदात्।

सुखानुबन्धिरूपत्वं शुभस्य लक्षणम्।

दुःखानुबन्धिरूपत्वमशुभस्य लक्षणम्।

अथवा प्राणातिपातादिविषयकनिवृत्तिशीलत्वे सति धर्मध्यानाद्याश्रयरूपत्वं शुभयोगस्य लक्षणम्।

प्राणातिपातादिविषयकप्रवृत्तिशीलत्वे सति आर्त्तरौ-

द्रध्यानाश्रयत्वमशुभयोगस्य लक्षणम् ।

पुनरपि स आश्रवो द्वेधा, सांपरायिकेर्यापथिकभेदात् । सकाषायिकत्रिविधयोगकृतकर्मागमनरूपत्वं सांपरायिकास्रवस्य लक्षणम् । अथवा संसारपरिभ्रान्तिकारणकत्वे सति यथासंभवं त्रिविधयोगकृतकर्मागमनरूपत्वम् ।

अकषायकृतत्वैकसमयस्थितिकत्वयोः सतोर्यथासंभवं त्रिविधयोगकृतकर्मागमनरूपत्वमैर्यापथिकास्रवस्य ।

अथ सांपरायिकाश्रवस्य भेदा उच्यन्ते । इन्द्रियकषायाव्रतक्रियाः सांपरायिकाश्रवस्य भेदाः । तत्रेन्द्रियाण्युक्तानि । कषायास्तु वक्ष्यमाणाः । इतरभेदास्तु उच्यन्ते । हिंसादीन्यव्रतानि सकलकर्मजालमूलानि । तत्प्रवृत्तौ आश्रवेषु प्रवृत्तिस्तन्निवृत्तौ तु निवृत्तिः । तेषां हिंसाद्यव्रतानां लक्षणं तु अग्रे वक्ष्ये ।

क्रियास्तु पञ्चविंशतिधा, सम्यक्त्वादिक्रियाभेदात् । सम्यक्त्वं चात्र शुद्धदलिकानुभवरूपं ज्ञेयम् ।

सा च प्रशम-संवेग-निर्वेदा-ऽनुकम्पा-ऽऽस्तिक्यलक्षणा जीवादिपदार्थविषया श्रद्धा जिनसिद्धगुरूपाध्याययतिजनयोग्यपुष्पधूप-प्रदीप-चामर-आतपत्र-नमस्करणादिवस्त्रपात्रान्नपानशय्यादानाद्यनेकविधवैयावृत्त्याभिव्यङ्ग्या सम्यक्त्वसद्भावसंवर्धनपदवीभूता सद्वेद्यबन्धहेतुभूता देवादिजन्मकारणरूपा सम्यक्त्वक्रिया । अतो विपरीता मिथ्याक्रिया ।

तासां लक्षणान्यपि प्रोच्यन्ते, जिनसिद्धगुर्वादीनां पूजानमस्कारवस्त्रपात्रादिप्रदानरूपवैयावृत्त्याभिव्यङ्ग्यत्वे सति सम्यक्त्वप्रवर्धकत्वं सम्यक्त्वक्रियाया लक्षणम्।

तद्विपरीतप्रवृत्तिरूपत्वं मिथ्याक्रियाया लक्षणम्।

योगत्रयकृतपुद्गलादानरूपत्वं समादानक्रियाया लक्षणम्। अथवा योगनिर्वृत्तिसमर्थपुद्गलग्रहणरूपत्वम्।

तत्र धावनवल्गनादिरूपः कायव्यापारः। परुषाऽनृतादिरूपो वाग्व्यापारः। अभिद्रोहादिरूपो मनोव्यापारः।

ईर्यापथकर्मकारणरूपत्वमीर्यापथिकक्रियाया लक्षणम्।

गमनागमनादिचेष्टाविषयकप्रवृत्तिनिमित्तकत्वं प्रयोगक्रियाया लक्षणम्।

सचित्तादिद्रव्येषु ममेति ममत्वकरणरूपत्वं परिग्रहक्रियाया लक्षणम्।

दाम्भिकवृत्तितया मनोवाक्कायानां प्रवृत्तौ प्रेरकत्वं मायाप्रत्ययिकक्रियाया लक्षणम्।

चारित्रमोहनीयोदये सति सावद्ययोगादिषु प्रवृत्तिरूपत्वमप्रत्याख्यानक्रियाया लक्षणम्।

कायचेष्टाविशेषरूपत्वं कायिकक्रियाया लक्षणम्।

खड्गादिनिर्वर्त्तनरूपत्वमधिकरणक्रियाया लक्षणम्।

मात्सर्यकरणरूपत्वं प्राद्वेषिकक्रियाया लक्षणम्।

दुःखोत्पादनरूपत्वं पारितापन्याः क्रियाया लक्षणम्।

प्रमत्तयोगात् प्राणातिपातरूपत्वं प्राणातिपातक्रियाया लक्षणम्।

अश्वादिचित्रकर्मक्रियादर्शनार्थं गमनरूपत्वं दार्ष्टिक्याः क्रियाया लक्षणम्।

रागादिना जीवादीनां स्पृशतः पृच्छतो या क्रिया तत्करणरूपत्वं स्पर्शनप्रत्ययिकक्रियाया लक्षणम्।

जीवादीनाश्रित्य या क्रिया तत्करणरूपत्वं प्रतीत्य-क्रियाया लक्षणम्।

हर्षवशादश्वरथादिकं श्लाघयतो या क्रिया तत्करण-रूपत्वं सामन्तोपनिपातिक्याः क्रियाया लक्षणम्।

स्वहस्तगृहीतजीवादिना जीवं मारयतो या क्रिया तत्करणरूपत्वं स्वाहस्तिक्याः क्रियाया लक्षणम्।

यन्त्रादिना जीवाजीवादीन् निसृजतो या क्रिया तत्क-रणरूपत्वं नैसर्गिक्याः क्रियाया लक्षणम्। अथवा पापा-दानादिना प्रवृत्तिविशेषाभ्युपगमकरणरूपत्वम्।

अन्याचरितपापानां प्रकाशनरूपत्वं विदारणक्रियाया लक्षणम्।

आनयनं समुद्दिश्य स्वपरैः क्रियाकरणरूपत्वमानयन-क्रियाया लक्षणम्।

जिनोक्तकर्त्तव्यविधिषु प्रमादवशतोऽनादररूपत्वम-नवकाङ्क्षक्रियाया लक्षणम्।

अदृष्ट्वाऽप्रमृज्य च भूमौ वस्त्रपात्राद्यादाननिक्षेपादिरूपत्वमनाभोगिकक्रियाया लक्षणम्।

अथवा उपयोगराहित्येन क्रियायां प्रवृत्तिकरणरूपत्वमनाभोगक्रियाया लक्षणम्।

छेदन-भेदन-ताडन-तर्जनादिकर्मविषयकप्रवृत्तिकरणरूपत्वमारम्भिकक्रियाया लक्षणम्।

उक्ता एकोनचत्वारिंशत् सांपरायिकास्रवाणां भेदाः। अथ तत्कर्म बध्नतां जीवानां परिणामतारतम्यवशत आश्रवतरतमताप्रदर्शनार्थमुच्यते। उपयोगपूर्वकप्राणातिपातादिप्रवृत्तिरूपज्ञातभावात्, अनुपयोगपूर्वकप्राणातिपातादौ प्रवृत्तिरूपाज्ञातभावात्, प्रकृष्टपरिणामरूपतीव्रभावात्, जघन्यपरिणामरूपमन्दभावात्, पराक्रमरूपवीर्यविशेषात्, शस्त्रादिरूपाऽधिकरणविशेषात्, साम्परायिकास्रवेषु विशेषो द्रष्टव्यः, तथा च प्रकृष्टकर्मबन्धजघन्यकर्मबन्धरूपपरिणामतारतम्योपयोगाऽनुपयोगपूर्वकप्राणातिपातादिप्रवृत्तिपराक्रमवीर्यविशेषशस्त्राद्यधिकरणविशेषैः सांपरायिकाश्रवेषु विशेषो द्रष्टव्यः।

प्रस्तुतसांपरायिककर्मबन्धस्य विशेषोऽधिकरणरूपाश्रवः। तीव्रादीनां च जीवादिविषयत्वात् जीवाजीवादीन् विषयीकृत्य सत्त्वाः तीव्रादिपरिणामेन प्रवर्त्तन्ते। ते च जीवाजीवास्तीव्रादिभावेन परिणन्तुरात्मनो विषयमुपेताः सांपरायिककर्मबन्धहेतवो भवन्ति।

तच्चाधिकरणं द्विविधम्, द्रव्याधिकरणभावाधिकरणभेदात्। तत्र द्रव्याधिकरणं दशधा, च्छेदन-दहन-मारण-उपघात-स्नेह-क्षाराम्लानुपयुक्तमनोवाक्कायलक्षणाधिकरणभेदात्।

तद्देव च लक्षणद्वारा प्रतिपाद्यते—

प्राणिपादादीनां परश्वादिना च्छेदनकरणरूपत्वं छेदनाधिकरणस्य लक्षणम्।

सचेतनाऽचेतनानां वह्निना दाहकरणरूपत्वं दहनाऽधिकरणस्य लक्षणम्।

सचेतनानां विषादिप्रयोगेण मारणरूपत्वं मारणाधिकरणस्य लक्षणम्।

पृथिवीकायादीनामुपघातकरणरूपत्वमुपघाताधिकरणस्य लक्षणम्।

घृततैलादिस्नेहेन तेषामेवोपघातकरणरूपत्वं स्नेहाधिकरणस्य लक्षणम्।

क्षारेण सकलत्वग्मांसाद्यपकर्त्तनरूपत्वं क्षाराधिकरणस्य लक्षणम्।

आरनालाद्यम्लेन पृथिवीकायोपघातकरणरूपत्वमम्लाधिकरणस्य लक्षणम्।

अनुपयुक्तः सन् मनोवाक्कायादिना यां यां चेष्टां निर्वर्तयति तया तया कर्म बध्यत इत्येवंरूपत्वमनुपयुक्तमनोवाक्कायलक्षणाधिकरणस्य लक्षणम्।

उक्तं द्रव्याधिकरणं लक्षणविधानतः। अथ भावाधिकरणमुच्यते—

तत्र भावस्तीव्रादिरूपात्मपरिणामः स एवाधिकरणं भावाधिकरणम्। तच्चाष्टोत्तरशतभेदभिन्नं भवति, तथाहि, जीवाधिकरणं संक्षेपतस्त्रिविधं संरम्भसमारम्भारम्भभेदात्। लक्षणं तु तेषां निगद्यते.—

प्राणातिपातादिविषयकसंकल्पावेशरूपत्वं संरम्भस्य लक्षणम्।

प्राणातिपातादिविषयकसाधनसान्निपातजनितपरितापनादिरूपत्वं समारम्भस्य लक्षणम्।

प्राणातिपातादिरूपक्रियानिर्वृत्तिरूपत्वमारम्भस्य लक्षणम्।

समारम्भादिरूपाधिकरणमपि प्रत्येकं त्रिविधम्, मनोवाक्कायभेदात्; तथा च मनःसंरम्भाधिकरणं वचःसंरम्भाधिकरणं कायसंरम्भाधिकरणम्।एवं समारम्भारंभाधिकरणयोरपि ज्ञातव्यम्। इति नव भेदाः संजाताः। पुनरपि कृतकारिताऽनुमोदनभेदतो ये भेदा भवन्ति तेऽपि प्रतिपाद्यन्ते, तथाहि, कृतकायसंरम्भः, कारितकायसंरम्भः, अनुमोदितकायसंरम्भश्च। एवं वाङ्मनःसंरम्भयोरपि।

इति संरम्भमादाय नवभेदाः, आरम्भमादायापि नव भेदाः, संकलने जाताः सप्तविंशतिः। तत्रापि क्रोधकृता-

स्तावन्तः, मानकृतास्तावन्तः, मायाकृतास्तावन्तः, लोभकृताश्च तावन्तः। इति सर्वसंकलने जाता अष्टोत्तरशतम्।

अधिकविचारणया तु अधिका अपि भवन्ति। तथाहि, अनन्तानुबन्धिकषायकृता अष्टोत्तरशतम्, एवमप्रत्याख्यानकृतास्तावन्तः, प्रत्याख्यानकृता अपि तावन्तः, संज्वलनकृता अपि तावन्तः, संकलने जाता द्वात्रिंशदुत्तरा चतुःशती। एवं स्वप्रतिष्ठितान्यप्रतिष्ठितोभयप्रतिष्ठिताऽप्रतिष्ठितभेदैः संकलने जाता अष्टाविंशत्युत्तरसप्तशताधिकसहस्रसङ्ख्याः। इति द्रव्यभावतो जीवाधिकरणं चिन्तितम्।

अथ क्रमप्राप्तमजीवाधिकरणं परामृश्यते—।

अजीवाधिकरणस्य मूलभेदाश्चत्वारः; निर्वर्तननिक्षेपसंयोगनिसर्गभेदात्। अजीवविषयकनिर्वर्तनादीन् कुर्वन् एष आत्मा सांपरायिकं कर्म बध्नाति।

तत्र निर्वर्तना द्विविधा, मूलोत्तरगुणनिर्वर्तनाभेदात्। तत्र मूलगुणनिर्वर्त्तनाधिकरणं पञ्चविधं शरीरं वाङ्मनःप्राणापानादिकं च। उत्तरनिर्वर्त्तनाधिकरणं काष्ठकर्मादिरूपम्। तच्च लक्षणतो निगद्यते—

औदारिकशरीरप्रायोग्यवर्गणाद्रव्यैर्निर्मापितं यदौदारिकसंस्थानं तत् प्रथमसमयादारभ्य मूलगुणनिर्वर्तनाधिकरणं भवति, कर्मबन्धनिमित्तत्वात्। तादृशौदारिकस्या-

ङ्गोपाङ्गकर्णवेधावयवसंस्थानादिकं तु मूलापेक्षयोत्तरगुण-निर्वर्त्तनाधिकरणं भवति ।

एवं वैक्रियशरीरप्रायोग्यवर्गणाद्रव्यैर्निर्मापितं यद् वैक्रियसंस्थानं तत् प्रथमसमयादारभ्य मूलगुणनिर्वर्त्तनाधिकरणमात्मनो भवति, कर्मबन्धनिमित्तत्वात् । तस्यैवाङ्गोपाङ्गकेशनखदन्तादिकमुत्तरगुणनिर्वर्त्तनाधिकरणं भवति मूलापेक्षया। आहारकशरीरप्रायोग्यवर्गणाद्रव्यैर्निर्मापितं यदाहारकसंस्थानं तत् प्रथमसमयादारभ्य मूलगुण-निर्वर्तनाधिकरणं भवति । तस्यैवाङ्गोपाङ्गादिकमुत्तरगुण-निर्वर्तनाधिकरणं भवति मूलापेक्षया । शीतोष्णपीतपावक-शक्तिभाजः शापानुग्रहकारिणः तैजसस्याऽपि तैजसशरीरप्रायोग्यवर्गणाद्रव्यैर्निर्मापितं यत् तैजसशरीरसंस्थानं, तत् प्रथमसमयादारभ्य मूलगुणनिर्वर्तनाधिकरणं भवति ।

एवं कार्मणस्यापि ज्ञेयम् ।

एवं वाङ्मनोवर्गणाद्रव्यैर्निर्मापितं यद् वाङ्मनःसंस्थानं तदपि मूलगुणनिर्वर्तनाधिकरणं भवति, तथा प्राणापानप्रायोग्यवर्गणाद्रव्यैर्निर्मापितोच्छ्वासनिःश्वासावपि मूल-गुणनिर्वर्तनाधिकरणं भवतः ।

कृत्रिमपुरुषादीनां निर्माणकरणरूपत्वं काष्ठकर्मरूपोत्तरगुणनिर्वर्तनाधिकरणस्य लक्षणम् ।

एवं सूत्रचीवरकादिना ग्रथितकृत्रिमपुत्रकादिनिर्माण-

करणरूपत्वं पुस्तकर्मनिर्वर्तनाधिकरणस्य, चित्रकर्मकरण-रूपत्वं चित्रकर्मनिर्वर्तनाधिकरणस्य च लक्षणम् ।

एवं लेप्यपत्रच्छेद्यजलकर्मभूमिकर्मादिशस्त्रकर्मादिनिर्वर्तनानां परिग्रहः कार्यः ।

अथ निक्षेपाधिकरणं प्रणिगद्यते । तदपि चतुर्विधम्, प्रत्यवेक्षितनिक्षेपाधिकरण-दुष्प्रमार्जितनिक्षेपाधिकरण-देशनिक्षेपाधिकरणा-ऽनाभोगिकनिक्षेपाधिकरणभेदात् ।

अप्रत्यवेक्षितभूप्रदेशे निक्षेप्य वस्त्रादिवस्तुनो निक्षेपकरणरूपत्वमप्रत्यवेक्षितानिक्षेपाधिकरणस्य लक्षणम् ।

दुष्प्रमार्जितभूप्रदेशे निक्षेप्य वस्त्रादिवस्तुनो दुष्प्रमार्जितरजोहरणेनाप्रमार्जितेन वा निक्षेपकरणरूपत्वं दुष्प्रमार्जितनिक्षेपाधिकरणस्य लक्षणम् ।

अप्रमार्जिते दुष्प्रमार्जिते वा देशे निक्षेप्य वस्तुनो निक्षेपकरणरूपत्वं देशनिक्षेपाधिकरणस्य लक्षणम् । तथा च एकतः सुप्रमार्जितमन्यतोऽप्रमार्जितं दुष्प्रमार्जितं वा सहसा शक्त्यभावाद् वा तत्र निक्षेपकरणं देशनिक्षेपाधिकरणम् ।

अनुपयोगपूर्वकप्रत्यवेक्षिते सुप्रमार्जिते वा देशे निक्षेप्य वस्तुनो निक्षेपकरणरूपत्वमनाभोगिकनिक्षेपाधिकरणस्य लक्षणम् ।

अथ संयोजनाधिकरणं प्रणिगद्यते—

संयोजनं मिश्रीकरणम्। तच्च संयोजनाधिकरणं द्विविधम्, भक्तपानसंयोजनाधिकरणोपकरणसंयोजनाधिकरणभेदात्।

अथ निसर्गाधिकरणं प्रतिपाद्यते। निसर्ग उत्सर्गः त्याग इत्यर्थः। तच्च त्रिविधम्, मनोवाक्कायनिसर्गाधिकरणभेदात्।

मनस्त्वेन परिणतमनोवर्गणाद्रव्याणां चिन्तनादिद्वारा त्यागकरणरूपत्वं मनोनिसर्गाधिकरणस्य लक्षणम्।

भाषात्वेनापादितवचनवर्गणापुद्गलानामुपदेशादिभिस्त्यागकरणरूपत्वं वाग्निसर्गाधिकरणस्य लक्षणम्।

शास्त्रपाटनाग्निजलप्रवेशोद्बन्धनविषप्रयोगादिभिः शरीरस्य त्यागकरणरूपत्वं कायनिसर्गाधिकरणस्य लक्षणम्।

मनोनिसर्गाधिकरणस्यात्र बहिर्व्यापारापेक्षया शरीरादीनामपि तदपेक्षया जीवाधिकरणमुक्तम्। यदि च जीवाधिकरणे आत्मनः परिस्पन्दः परिणामो योगः, तदा मूलगुणनिर्वर्तनाधिकरणे शरीरादीनां संस्थानमात्रम्। सकषायाकषायिकबन्धयोर्योगः कायादिव्यापारो यथायोगं सांपरायिकेर्यापथिकयोः कर्मणोराश्रवो भवति। एवं च सति सांपरायिकमष्टविधं ज्ञानावरणादिकर्म जातिभेदेन कथ्यते। तथा सति फलभेददर्शनेन संशयः स्यादत उच्यते। अस्ति

खलु फलभेदो यथाहारः कश्चिदेकविधोऽपि जग्धो जठरं प्राप्य रसरुधिरमांसमेदोमज्जास्थिशुक्रमलभावेन परिणमति, तथैकप्रयोगाक्षिप्तकर्मण आश्रवभेदसंभवेऽष्टविधः परिणामः प्रकृतिं प्राप्य भवति। अत्र प्रकृतिः स्वभावः। सा च काचिज्ज्ञानावरणस्वभावा, काचिद्दर्शनावरणस्वभावा। एवमष्टविधमपि भिन्नस्वभावं वक्ष्ये। अतः प्रकृतिमाश्रित्याश्रवभेदप्रदर्शनार्थमुच्यते—

अथवा सांपरायिकमष्टविधं कर्म, तत्त्वं किं सर्वस्यापि अष्ट आश्रवा आहोस्विद् विशेषोऽस्ति ? अस्तीत्युच्यते । सत्यपि योगत्वाविशेषे प्रकृतिं प्राप्याश्रवविशेषो भवति । तथाहि, ज्ञानदर्शनयोरिमे आश्रवा प्रदोषनिह्नवमात्सर्यान्तरायासादनोपघातरूपा भवन्ति । एतद्द्वारा ज्ञान-दर्शनावरणं कर्म वध्यत इति फलितार्थः ।

ज्ञानिसाध्वादीनां ज्ञानसाधकपुस्तकादीनां च प्रत्यनीकत्वेनानिष्टाचारणरूपत्वं ज्ञानज्ञानिविषयकान्तरिकाप्रीतिकरणरूपत्वं वा प्रदोषस्य लक्षणम् ।

न मया तत्समीपेऽधीतमित्यपलापकरणरूपत्वं निह्नवस्य लक्षणम् ।

दानार्हेऽपि ज्ञाने कुतश्चित् कारणादयोग्यापादनरूपत्वं मात्सर्यस्य लक्षणम् ।

ज्ञानाध्ययनादीनां व्यवच्छेदकरणरूपत्वमन्तरायस्य

लक्षणम् ।

मनोवाग्भ्यां ज्ञानस्य वर्जनरूपत्वमासादनस्य लक्षणम् ।

प्रशस्तज्ञानादीनां दापाद्भावनरूपत्वमुपघातस्य लक्षणम् । उक्तं सांपरायिकं ज्ञानदर्शनावरणं कर्म ।

अथ वेदनीयं प्रतिपाद्यते. दुःख-शोक-तापाक्रन्दनवधपरिदेवनादिकं कुर्वाणो जीवो असातावेदनीयकर्म बध्नाति । तत्र असातावेदनीयोदये सति द्रव्यान्तरोपनिपाताभिमतवियोगानिष्टश्रवणादिभिरात्मनो यः पीडालक्षणः परिणामस्तद्रूपत्वं, पीडालक्षणपरिणामरूपत्वं वा दुःखस्य लक्षणम् ।

अनुग्राहकस्नेहादिव्यवच्छेदे सति चित्तस्य वैक्लव्यरूपत्वं शोकस्य लक्षणम् ।

परिभवादिनिमित्तकसंजाताविलान्तःकरणस्य तीव्रानुशयपरिणामरूपत्वं तापस्य लक्षणम् ।

परितापजन्याश्रुनिपाताङ्गविकारप्रचुरविलापाभिव्यक्तकरणरूपत्वमाक्रन्दस्य लक्षणम् ।

प्रमत्तयोगात् प्राणिप्राणवियोजनरूपत्वं वधस्य लक्षणम् ।

संक्लेशप्रवणत्वस्वपरानुग्रहेच्छाप्रवणत्वे सति अनुकम्पाप्रायत्वं परिदेवनस्य लक्षणम् ।

एतान्यात्मपरोभयस्थानि दुःखादीनि असातावेदनीयस्याश्रवरूपाणि भवन्ति ।

भूतव्रत्यनुकम्पादानसरागसंयमादियोगक्षान्तिशौचानि कुर्वाणो जीवः[१] सातावेदनीयं कर्म बध्नाति। आयुर्नामकर्मोदये सति भवन्ति भविष्यन्ति अभूवन्निति भूतानि एकेन्द्रियादिपञ्चेन्द्रियपर्यन्तानि।

व्रताभिसंबन्धरूपत्वं व्रतिनः परपीडामात्मीयां कुर्वाणस्यानुग्रहार्द्रीकृतान्तःकरणस्य चानुपश्चात् परकीयदुःखदर्शनानन्तरं हृदयकम्पनरूपत्वमनुकम्पायां लक्षणम्।

स्वपरानुग्रहार्थं स्वकीयस्य वस्तुनोऽतिसर्जनरूपत्वं दानस्य लक्षणम्।

संज्वलनलोभादिकषायो रागः, तत्सहवर्तित्वं सरागस्य लक्षणम्। पञ्चमहाव्रतत्वं संयमस्य लक्षणम्। सरागस्य संयमः सरागसंयमः। मूलोत्तरगुणसंपल्लोभाद्युभयभाज इति यावत्।

निरवद्यक्रियानुष्ठानरूपत्वं योगस्य लक्षणम्। सरागसंयमादीनां योगः सरागसंयमयोगः।

धर्मप्रणिधाने सति मनोवाक्कायैः क्रोधनिग्रहरूपत्वं, उदितक्रोधस्य कथंचिद् वैफल्यापादनरूपत्वं, क्रोधोदय-

---

१ अनुकम्पा द्विधा, भूतविषया, व्रतिविषया च। तत्र हृदयकम्पनरूपानुकम्पा भूतविषया, व्रतिविषया तु भक्तिरूपानुकम्पा ज्ञेया, अनुकम्पाशब्दस्यात्र भक्तिवाचित्वात्, पूर्वाचार्यैरपि तथैव प्रतिपादितत्वाच्च।

निरोधरूपत्वं वा क्षान्तेर्लक्षणम्।

लोभकषायरक्तात्मवाससः संतोषवारिणा विमलीपादनरूपत्वं शौचस्य लक्षणम्। तच्च शौचं द्विविधं, द्रव्यभावभेदात्।

स्नेहगन्धलेपोद्वर्तनापवर्तनप्राशुकजलादिना शरीरशुद्धिकरणरूपत्वं द्रव्यशौचस्य लक्षणम्।

अकुशलप्रवृत्तिनिरुद्धमनोवाक्कायस्य चरणतपोऽनुष्ठायिनश्च प्रायो निर्जराफलरूपत्वं भावशौचस्य लक्षणम्।

अन्येऽपि संयमासंयमबालतपोऽकामनिर्जराधर्मानुरागधर्मश्रवणशीलव्रतपौषधोपवासतपस्विम्लानवैयावृत्त्यानुष्ठानमातृपितृभक्तिसिद्धचैत्यनमनपूजाशुभपरिणामादयोऽपि सातावेदनीयस्याश्रवा भवन्ति।

अथ मोहनीयस्याश्रवः प्रतिपाद्यते; तच्च द्विविधः, दर्शनचारित्रमोहभेदात्। तत्रापि प्रथमतो दर्शनमोहस्याश्रवा उच्यन्ते—

केवलिश्रुतसङ्घधर्मदेवावर्णवादादिकं कुर्वाणो जीवो दर्शनमोहनीयं कर्म बध्नाति। अत्रापि सामान्यतोऽवर्णवादस्य लक्षणमुच्यते—

रागद्वेषमोहावेशाद् सद्भूते वस्तुनि दोषोद्भावनरूपत्वमवर्णवादस्य लक्षणम्।

कवलाहाराभावरूपत्व-दिगम्बरत्व-समवसरणभूम्यप-

कायाद्यारम्भानुमोदित्वदुष्करदुःखरूपमार्गोपदेशित्वादिक-थनरूपत्वं केवल्यवर्णवादस्य लक्षणम्।

अत्र च केवल्यवर्णवादघटककेवलित्वं लक्षणतो नि-गद्यते—

सकलज्ञानावरणक्षयसमुद्भूतसमस्तज्ञेयविषयकाव-बोधरूपत्वे सति साक्षादर्थपरिच्छेदिचेतनापर्यायरूपत्वं केवलस्य, तद्वत्त्वं च केवलिनो लक्षणम्।

मांसभक्षणमद्यपानादीनामनवद्याभिधानरूपत्वम्, अवि-दग्धप्राकृतभाषानिबद्धादिकथनद्वारा जनसमुदायेष्वप्रीत्यु-त्पादकत्वम्, केवलिकवलाहाराभावादिकथनरूपत्वं वा श्रुतावर्णवादस्य लक्षणम्।

अथ पूर्वोक्तमपि श्रुतावर्णवादघटकश्रुतस्य लक्षणमत्र विशेषत उच्यते—

तीर्थकरोपदिष्टत्वे सति बुद्ध्यतिशयवद्गणधरैरव-धारितरूपत्वं श्रुतस्य लक्षणम्।

तीर्थकरादिनामकर्मोदयवर्तितीर्थकरादिना प्रोक्तरूप-त्वमङ्गाख्यश्रुतस्य लक्षणम्। तादृशाङ्गार्थानुवादित्वमुपाङ्गा-दीनां च।

पञ्चाग्निकष्टासहिष्णुत्वगवाद्यपूजनादिरूपत्वं सङ्घावर्ण-वादस्य लक्षणम्।

लोचादिकष्टकारिणो बाह्यशौचरहिता मागदत्तादा-

नाद् भूयोऽपि दुःखिता भविष्यन्तीत्यादिकथनरूपत्वं संयपिसङ्घावर्णवादस्य लक्षणम्।

श्राद्धश्राविकानां न धर्मार्थं स्नानम्, न च द्विजातिभ्यो दानम्, न च गवां गृहे पूजनमित्यादिकथनरूपत्वं गृहस्थसङ्घावर्णवादस्य लक्षणम्।

अथ सामान्येन सङ्घावर्णवादलक्षणमुच्यते—

काकशुकशृगालसारमेयानां समुदायोऽपि सङ्घ इति कथनरूपत्वं सङ्घावर्णवादस्य लक्षणम्।

अथ सङ्घस्य लक्षणमुच्यते—

साधुसाध्वीश्रावकश्राविकालक्षणचातुर्वर्ण्य[१]रूपत्वं सङ्घस्य लक्षणम्।

नास्त्येव धर्मः प्रत्यक्षप्रमाणाविषयत्वादित्यादिकथनरूपत्वं मनःपरिकल्पितगुणहीनादिकथनरूपत्वं वा धर्मावर्णवादस्य लक्षणम्।

अथ धर्मलक्षणं निगद्यते—

अभ्युदयापवर्गहेतुरूपत्वं धर्मस्य लक्षणम्।

परस्परप्रविचाराः खलु देवाः, पण्ढवदपरे बलवन्तोऽल्पबलवन्तं देवमभियुज्य मैथुनं सेवन्ते, इत्यादिकथनरूपत्वं शुक्रशोणितबल्युपहाराशिनो देवा इत्यादिकथन-

---

१ सम्यक्त्वज्ञानसंवरतपोलक्षणाश्चत्वारो वर्णाः, तत्र भवं चातुर्वर्ण्यं, पूर्वोक्तचतुर्णां समुदायरूपत्वं वा।

रूपत्वं वा देवावर्णवादस्य लक्षणम् ।

देवस्य लक्षणं त्विदम् ।

देवगतिनामकर्मोदयवर्तिरूपत्वं देवस्य लक्षणम् ।

कथिता एते दर्शनमोहस्याश्रवाः। अथ चारित्रमोहस्य ते प्रतिपाद्यन्ते-

कषायादिमोहनीयोदयजन्यातिसंक्लिष्टपरिणामरूपत्वं चारित्रमोहनीयस्य लक्षणम् ।

तथा च चारित्रमोहोदयजन्यातिसंक्लिष्टपरिणामेन जीवश्चारित्रमोहनीयं कर्म बध्नाति ।

अथ नोकषायस्याश्रवा उच्यन्ते। ते च नवधा, स्त्रीवेद-पुरुषवेद-नपुंसकवेद-रति-अरति-हास्य-भय-शोक-जुगुप्सा-नोकषायमोहनीयभेदात् ।

शब्दादिविषये गार्ध्येर्ष्यालुत्वानृतवादित्ववक्रतापरदाररतिप्रियतादिकरणरूपत्वं स्त्रीवेदाश्रवस्य लक्षणम् ।

मन्दक्रोधकषायादिना स्वदाररतिप्रियताऽवक्रतानीर्ष्यालुत्वसत्यवादित्वादिभवनरूपत्वं पुरुषवेदाश्रवस्य लक्षणम् ।

तीव्रक्रोधादिना पशूनां वधनिर्लाञ्छनमुण्डनस्त्रीपुरुषविषयकानङ्गसेवनशीलव्रतगुणधारिविषयकमैथुनसेवनेच्छातीव्रविषयानुषङ्गितादिकरणरूपत्वं नपुंसकवेदाश्रवस्य लक्षणम् ।

एतानाश्रवान् सेवमानो जीवः क्रमेण स्त्री-पुरुष-नपुंसकवेदलक्षणं कर्म बध्नाति।

शोकोत्पादनशोचनपरदुःखाविष्करणादिरूपत्वं शोकमोहनीयास्रवस्य लक्षणम्।

विचित्रपरिक्रीडनबहुविधरमणपीडाभावप्रीतिजननादिकरणरूपत्वं रतिमोहनीयास्रवस्य लक्षणम्।

परपरिभवादिकरणेन रतिविनाशपापशीलताभवनरूपत्वमरतिमोहनीयाश्रवस्य लक्षणम्।

भयोत्पादननिर्दयत्वत्रासनादिकरणरूपत्वं भयमोहनीयास्रवस्य लक्षणम्।

कुशलक्रियाचारप्रतिपादनप्रवणे सद्धर्मे जुगुप्सादिकरणरूपत्वं जुगुप्सामोहनीयाश्रवस्य लक्षणम्।

तथा च परमधार्मिकसाधूनां निन्दया धर्माभिमुखानां विघ्नकारित्वेन देशविरतानामन्तरायकरणेन मद्यमधुमांसरूपाऽविरतिगुणवर्णनेन चारित्रगुणदूषणेन परस्य कषायनोकषायोदीरणेन च चरणगुणोपघातकारिकषायनोकषायमोहनीयं कर्म जीवो बध्नाति।

अथायुष्कर्मबन्धकारणं निगद्यते—

अनवरतकण्डन-खण्डन-ताडन-तर्जन-प्रेषणी-चुल्लीकादिबह्वारम्भव्यापारबद्धत्वे सति बहुपरिग्रहेच्छारूपत्वं नारकायुराश्रवस्य लक्षणम्।

चारित्रमोहोदये सति आत्मनः कुटिलरूपत्वं तैर्यग्योनाश्रवस्य लक्षणम् ।

तथा च मिथ्यात्वावष्टम्भाधर्मदेशनापरिग्रहकूटकर्मनीलकापोतलेश्यापरिणामार्त्तध्यानोन्मार्गप्रज्ञापनमार्गनाशनसातिचारव्रतशीलतावसुधाराजितुल्यक्रोधादिकं कुर्वन् जीवस्तैर्यग्योनस्यायुर्बध्नाति ।

स्वभावमार्दवार्जवाल्पेच्छारम्भादिकरणरूपत्वं मानुषायुराश्रवस्य लक्षणम् ।

तथा च वालुकाराजिसदृशकषायतास्वभावमधुरतालोकयात्रोदासीनतादेवतागुरुपूजनशीलतातिथिसंविभागताकापोतादिलेश्यापरिणामधर्मध्यानादिकं कुर्वाणो जीवो मानुषायुर्बध्नाति ।

निःशीलव्रतरूपता सर्वेषां नारकतैर्यग्मानुषायुषामाश्रवकारणं भवति । अयं निष्कर्षः- निःशीलव्रतत्वं देवायुषः कारणं न भवति, शीलव्रतवतां देवेपूत्पाद इत्यन्यत्रोक्तत्वात् ।

सरागसंयमसंयमासंयमाकामनिर्जरावालतपःशीलव्रतादीनां मध्येऽन्यतमकरणरूपत्वं देवायुराश्रवस्य लक्षणम् ।

संज्वलनलोभलक्षणरागसहवर्त्तित्वे सति सावद्ययोगविरतिरूपत्वं सरागसंयमस्य लक्षणम् ।

देशतः प्राणातिपातादिभ्यो निवृत्तिरूपत्वं संयमासं-

यमस्य लक्षणम्।

भोगोपभोगादीनां निरोधेच्छाया अभावेऽपि पारतन्त्र्येणनिरोधकरणरूपत्वम्, अनुपयोगपूर्वकपापपुद्गलपरिशाटकरणरूपत्वं वा अकामनिर्जराया लक्षणम्।

लोकोत्तरनिरवद्यक्रियानुष्ठानरहितत्वे सति लौकिकाभिमतक्रियानुष्ठानयुक्तत्वम्, मिथ्यात्वसहचरितरागद्वेषादियुक्तस्य जनस्य धर्माय पञ्चाग्न्यादिसेवनयागहिंसादिकरणरूपत्वं वा बालतपसो लक्षणम्।

अथ बालतपसो भावार्थ उच्यते—बाला नाम मिथ्याज्ञानोपरक्ताशयाः शिशव इव हिताहितप्राप्तिविमुखास्तपोनुष्ठानजलानलप्रवेशगिरिशिखरभृगुपातादिकारकास्तापसादयस्तेषां तपो बालतपः, अज्ञानकष्टमिति।

शीलव्रतत्वं नाम देशतः सर्वथा वा ब्रह्मचर्यपालनरूपत्वम्, परदाराणां तु सर्वथावर्जनरूपत्वम्।

तथा च सरागसंयमादिकं कुर्वाणो जीवो देवायुर्बध्नाति।

योगवक्रता-विसंवादनादिकं कुर्वाणो जीवोऽशुभनामकर्म बध्नाति।

कायवाङ्मनोलक्षणयोगस्य कुटिलतया प्रवृत्तिरूपत्वं योगवक्रताया लक्षणम्।

अन्यथा प्रतिपादनरूपत्वं विसंवादनस्य लक्षणम्।

एतद्विपरीतं योगार्जवादि-संवादनादिकं कुर्वाणो

जीवः शुभनामकर्म बध्नाति ।

दर्शनविशुद्धिविनयसंपन्नताशीलव्रतविषयकानतिचारज्ञानोपयोगसंवेगयथाशक्तित्यागतपःसमाधिवैयावृत्त्यार्हदाचार्यबहुश्रुतप्रवचनभक्तिआवश्यकापरिहाणिमार्गप्रभावनाप्रवचनवत्सलत्वादिकं कुर्वाणो जीवस्तीर्थंकरनामकर्म बध्नाति ।

जिनोक्ततत्त्वविषयकसम्यग्दर्शने निःशङ्कितत्वाद्यष्टाङ्गसेवनरूपत्वं दर्शनविशुद्धेर्लक्षणम् ।

सम्यग्ज्ञानादौ तद्वत्सु चाऽऽदरकरणरूपत्वे सति माननिवृत्तिकरणरूपत्वं विनयसंपन्नताया लक्षणम् ।

अयमर्थः, विनीयतेऽपनीयतेऽष्टप्रकारं कर्म येनासौ विनयः, तेन संपन्नो विनयसंपन्नः; तस्य भावो विनयसंपन्नता । स चतुर्धा, ज्ञानदर्शनचारित्रोपचारविनयभेदात् ।

कालाऽकालाऽध्ययनाऽनध्ययनबहुमानोपधानादिकरणरूपत्वं ज्ञानविनयस्य लक्षणम् ।

निःशङ्कनिष्काङ्क्षादिभवनरूपत्वं दर्शनविनयस्य लक्षणम् ।

समितिगुप्तिप्रधानाचरणरूपत्वं चारित्रविनयस्य लक्षणम् ।

अभ्युत्थानासनप्रदानाऽञ्जल्यादिकरणरूपत्वमुपचारविनयस्य लक्षणम् ।

उत्सर्गापवादात्मकसर्वज्ञप्रणीतसिद्धान्तानुसारितया शीलव्रतविषयकानुष्ठानकरणरूपत्वं शीलविषयकाऽनतिचारस्य लक्षणम् ।

प्रतिक्षणं वाचनाप्रच्छनाऽनुप्रेक्षाऽऽम्नायधर्मोपदेशैरभ्यसनकरणरूपत्वं ज्ञानोपयोगस्य लक्षणम् ।

जन्मजरामरणादिक्लेशरूपसंसारात् प्रतिक्षणं भयपरिणामरूपत्वं संवेगस्य लक्षणम् ।

विधिपूर्वकसुपात्रप्रदानरूपत्वं त्यागस्य लक्षणम् ।

कर्मतापनरूपत्वं तपसो लक्षणम् ।

सम्यग्ज्ञानादीनामाधारस्य साध्वादिरूपसङ्घस्योपद्रवाभावोत्पादनरूपत्वं समाधेर्लक्षणम् ।

साधूनां प्रासुकाहारोपधिशय्याभेषजादिना विश्रामकरणं वैयावृत्त्यस्य लक्षणम् ।

तत्र सङ्घस्य समाधिकरणं, साधोर्वैयावृत्त्यकरणं, अथवोभयोः समाधिवैयावृत्त्यकरणम्, अर्हदाचार्यबहुश्रुतप्रवचनेषु यथासम्भवमाशयशुद्धिपूर्वकानुरागरूपत्वं भक्तेर्लक्षणम् ।

सा च भक्तिः परमभावविशुद्धिपूर्वकाभिगमनवन्दनपूजनपर्युपासनयथाविधिक्रमपूर्वकाध्ययनश्रवणरूपा ।

सकलसावद्यविरतिरूपसामायिकाद्यावश्यकानां दिवसरात्राभ्यन्तरेऽवश्यतया कर्त्तव्यानुष्ठानरूपत्वं, षडावश्यकानां यथाकालकरणरूपत्वं वा आवश्यकापरिहाणेर्लक्षणम् ।

सम्यग्दर्शनादिमार्गस्य मानं परित्यज्य करणाकरणोपदेशद्वारा प्रकाशनं मार्गप्रभावनाया लक्षणम् ।

अर्हच्छासनानुष्ठायिनां श्रुतधरबालवृद्धतपस्विशैक्षकग्लानादीनां संयमानुष्ठानश्रुताध्ययनाद्यर्थं वस्त्रपात्रभक्तपानादिप्रदानं, द्रव्यभावतः साधर्मिकस्नेहकरणरूपत्वं वा प्रवचनवात्सल्यस्य लक्षणम् ।

एते तीर्थंकरनामकर्मण आश्रवा भवन्ति ।

स्वकीयप्रशंसाऽसद्भूतगुणोद्भावनादिकं परकीयनिन्दासद्भूतगुणाच्छादनादिकं च कुर्वाणो जीवो नीचैर्गोत्रकर्म बध्नाति ।

भूताभूतगुणानामात्मनैव प्रख्यापनरूपत्वमात्मप्रशंसाया लक्षणम् ।

अभूतगुणोद्भावनरूपत्वमसद्गुणोद्भावनस्य लक्षणम्

गुणवतामपि परेषां गुणापह्नवनद्वारा अपलापकरणरूपत्वं, भूतानामभूतानां वा परकीयदोषाणामुद्भावनरूपत्वं वा निन्दाया लक्षणम् ।

विद्यमानगुणाच्छादनरूपत्वं गुणाच्छादनस्य लक्षणम्

अथ च लक्षणघटकप्रशंसाऽनुद्भूतवृत्तितोद्भावनलक्षणपदार्थानामपि लक्षणान्युच्यन्ते—

गुणोद्भावनेच्छारूपत्वं प्रशंसाया लक्षणम् ।

प्रतिबन्धहेतुसन्निधाने सति अनुद्भूतवृत्तितारूपत्व-माच्छादनस्य लक्षणम्।

प्रतिबन्धकाऽभावे प्रकाशवृत्तितारूपत्वमुद्भावनस्य लक्षणम्।

नीचैर्वृत्त्यनुत्सेकादिकं कुर्वाणो जीव उच्चैर्गोत्रकर्म बध्नाति। तत्र

विनयप्रवणत्वं नीचैर्वृत्तेर्लक्षणम्।

गर्वाभावकरणरूपत्वमनुत्सेकस्य लक्षणम्।

पूर्वोक्तनीचगोत्रलक्षणाऽभावत्वे सति विनयप्रवणता-पूर्वकगर्वाभावादिकरणरूपत्वमुच्चैर्गोत्रस्य लक्षणम्।

दानलाभभोगोपभोगवीर्याणामन्तरायं कुर्वाणो जीवो-ऽन्तरायलक्षणं कर्म बध्नाति।

दानादीनां विघ्नकरणरूपत्वमन्तरायस्य लक्षणम्।

पूर्वोक्तं सातावेदनीयाश्रवप्रतिपादनप्रकरणे भूतानु-कम्पा व्रत्यनुकम्पादिकमिति। तत्र किं, व्रतं, को वा व्रत-वान् इति जिज्ञासायां पूर्वं व्रतप्रतिपक्षीभूताऽव्रतस्वरूपं प्रति-पाद्य पश्चाद् व्रतव्रतिनोः स्वरूपमुच्यते—

हिंसाऽसत्यस्तेयाब्रह्ममूर्च्छालक्षणाऽव्रताचरणं कुर्वा-णो जीवश्चारित्रमोहनीयं कर्म बध्नाति।

कषायादिप्रमादपरिणतात्मना कायादिकरणव्यापार-पूर्वकप्राणव्यपरोपणरूपत्वं, प्रमत्तकर्तृकयोगमाश्रित्य प्रा-णव्यपरोपणरूपत्वं, प्रमादयुक्तयोगमाश्रित्य प्राणव्यपरोप-

णरूपत्वं, द्वेषबुद्ध्याऽन्यस्य दुःखोत्पादनरूपत्वं वा हिंसाया लक्षणम् ।

कषायादिप्रमादपरिणतात्मना सद्भूतनिह्नवाऽसद्भूतोद्भावनरूपत्वं, प्रमत्तयोगमाश्रित्य सद्भावप्रतिषेधरूपत्वे सति असद्भावोद्भावनरूपत्वं वाऽसत्यस्य लक्षणम् ।

तत्र सद्भावप्रतिषेधो नाम 'नास्ति जीवो' 'नास्ति परलोकः' इति प्रतिपादनरूपत्वम् ।

असद्भावोद्भावनं नाम श्यामातन्दुलमात्रोऽयमात्मा, अङ्गुष्ठपर्वमात्रो वा । तथा च शास्त्रप्रतिपिद्धत्रागनुष्ठानलक्षणगर्हाऽपि त्याज्या । तथाहि—हिंसायुक्तं वचः सद्भूतार्थप्रतीतिकार्यपि मृषा एव, अतो हिंसानिवृत्तिपरिरक्षणार्थं मृषानिवृत्तिरुपदिष्टा ।

परपरिगृहीतधनधान्यादीनामाक्रान्त्या चौर्यादिलक्षणशास्त्रप्रतिपिद्धनिषेधाचरणेन वा ग्रहणरूपत्वम्, कषायादिप्रमादकलुषितबुद्ध्या परकीयाऽदत्ततृणादिरूपद्रव्यजातस्यादानरूपत्वं वा स्तेयस्य लक्षणम् ।

कषायादिप्रमादपरिणतात्मनो मोहोदये सति चेतनाऽचेतनस्रोतसोरासेवनरूपत्वं, मोहोदयजनितरागपरिणामवशात् परस्परं स्वयमेव वाऽऽश्लेषजनितसुखमुपलभमानयोः स्त्रीपुंसोर्विलक्षणसंयोगविशेषरूपत्वं वा, उदितवेदयोः स्त्रीपुंसोः परस्परं स्वयमेव वा विलक्षणसंयोगपूर्वकशरीराश्लेपे सति रागपरिणामरूपत्वं वाऽब्रह्मणो लक्षणम् ।

सचित्ताचित्तमिश्रद्रव्येषु ममत्वलक्षणतृष्णारूपत्वं, प्रमत्तयोगमाश्रित्य बाह्याभ्यन्तरद्रव्येषु ममेति ममत्वभावलक्षणमूर्च्छारूपत्वं, प्रमत्तयोगानुवृत्तिसामर्थ्याद् बाह्याभ्यन्तरतृष्णारूपत्वं, बाह्याभ्यन्तरद्रव्यस्यार्जन-रक्षणसंस्कारादिव्यापारविषयकतृष्णारूपत्वं वा परिग्रहस्य लक्षणम्।

एवं चोक्तपञ्चाश्रवपरित्यागरूपत्वं विरतेर्लक्षणम् ।

सा च विरतिर्द्वेधा, देश-सर्वविरतिभेदात् ।

एनं मारयामीतिसंकल्पपूर्वकारम्भविषयकहिंसायाः परित्यागरूपत्वं देशतः प्राणातिपातविरतेर्लक्षणम् ।

कूटसाक्षिदानादिरूपस्थूलमृषावादपरित्यागरूपत्वं देशतो मृषावादविरतेर्लक्षणम् ।

परकीयपरिलघुतृणकाष्ठादिद्रव्याणां पतितविस्मृतादिरूपाणामनादानरूपत्वं देशतः स्तेयाविरतेर्लक्षणम् ।

स्वदारसंतोषपूर्वकं परदाराणां विधवा-सधवा-वेश्या-कन्या-लक्षणानां सर्वथावर्जनरूपत्वं देशतोऽब्रह्मविरतेर्लक्षणम् ।

धनधान्यादिकद्रव्याणां परिमाणकरणं देशतः परिग्रहविरतेर्लक्षणम् ।

पूर्वोक्तहिंसाऽसत्यस्तेयाऽब्रह्मपरिग्रहलक्षणानां पञ्चानामाश्रवाणां सर्वथा वर्जनं सर्वविरतेर्लक्षणम् ।

अथ च तेषामेव पञ्चानामाश्रवाणां सर्वथावर्जनरूपमहाव्रतानां स्थैर्यार्थमेकैकस्य व्रतस्य भावनापञ्चकं क्रमेण

प्रतिपाद्यते, तथाहि- ईर्यासमिति-मनोगुप्ति-एषणासमिति-आदाननिक्षेपणासमित्यालोकितपानान्नभोजनरूपाः प्रथममहाव्रतस्य पञ्च भावना भवन्ति ।

लोकातिवाहिते सूर्यांशुचुम्बिते मार्गे जन्तुरक्षणार्थमालोक्य सम्यग्गमनलक्षणप्रवृत्तिरूपत्वमीर्यासमितेर्लक्षणम् ।

आर्तरौद्रध्यानप्रचारानिरोधपूर्वकधर्मध्यानादिप्रचाररूपत्वं, समस्तकल्पनाजालविमुक्तिरूपत्वे सति समत्वप्रतिष्ठापूर्वकात्मरमणतारूपत्वं वा मनोगुप्तेर्लक्षणम् ।

द्विचत्वारिंशद्भिक्षादोषवर्जनपूर्वकान्नपानादीनां गवेषणरूपत्वमेषणासमितेर्लक्षणम् ।

औघिकौपग्राहिकोपधेरादाननिक्षेपयोरागमानुसारेण प्रत्यवेक्षणप्रमार्जनलक्षणसम्यक्प्रवृत्तिरूपत्वमादाननिक्षेपणासमितेर्लक्षणम् ।

पात्रमध्ये गृहीतशुद्धपिण्डस्य चक्षुरादिना प्रत्यवेक्षणीयत्वे सति पुनः सांपातिकजीवसंरक्षणार्थं प्रतिश्रयमागत्य दिवा प्रकाशवत्प्रदेशे स्थित्वा सुप्रत्यवेक्षणपूर्वकं पानान्नभोजनलक्षणप्रवृत्तिरूपत्वमालोकितपानभोजनस्य लक्षणम् ।

अथ द्वितीयस्य भावनापञ्चकं निगद्यते;—

आलोचितभाषण-क्रोध-लोभ-भय-हास्य-प्रत्याख्यानलक्षणाश्च पञ्च भावना द्वितीयस्य भवन्ति ।

असद्भूतार्थप्रतिपादननिरोधपूर्वकप्राणिप्राणानुपघातकारिवचनरूपत्वं सम्यगालोचनापूर्वकवचनलक्षणप्रवृत्तिरूपत्वं वा आलोचितभाषणस्य लक्षणम्।

मोहनीयकर्मोदयनिष्पन्नाऽप्रीतिलक्षणद्वेषपूर्वकवचननिरोधरूपत्वं क्रोधनिश्रितवचनप्रत्याख्यानस्य लक्षणम्।

समस्तव्यसनैकराजिरूपमोहनीयकर्मोदयाविर्भूतरागपरिणामोदये सति विचित्रप्रकारेच्छाविषयकवचननिरोधरूपत्वं, रागमोहनीयपरिणामोदये सति वितथभाषी भवतीति सत्यमनुपालयतो जीवस्य वितथाकारवञ्चनलक्षणपरिणामपरित्यागरूपत्वं वा लोभनिश्रितवचनप्रत्याख्यानस्य लक्षणम्।

ऐहिकामुष्मिकादिभेदभिन्नसप्तविधभयमोहनीयोदये सति अनृतभाषणं सुलभं भवति, ततस्तत्प्रत्याख्यानरूपत्वं भयनिश्रितवचनप्रत्याख्यानस्य लक्षणम्।

हास्यमोहोदये सति परिहसन् परेण सार्धमलीकमपि ब्रूयादिति तत्प्रत्याख्यानरूपत्वं हास्यनिश्रितवचनप्रत्याख्यानस्य लक्षणम्।

अथ तृतीयव्रतस्य भावनापञ्चकं निगद्यते —

आलोचितावग्रहयाच्ञाभीक्ष्णावग्रहयाच्ञानैतावन्मात्रमित्यवग्रहधारणसमानधार्मिकावग्रहयाचनानुज्ञापितपानभोजनलक्षणा भावनाः पञ्च तृतीयस्य भवन्ति।

देवेन्द्रराजगृहपतिशय्यातराणामवग्रहो याचनीयः। तत्रापि पूर्वः पूर्वो बाध्यः, उत्तर उत्तरस्तु बाधक इति संचिन्त्य यो यस्य स्वामी सोऽवग्रहस्तं प्रति याचनीयः। आसां भावनानां स्फुटतरत्वाद्विशेषतो नोच्यते।

अथ चतुर्थस्य भावनापञ्चकं निगद्यते,—

स्त्रीपशुपण्डकसंसक्तशयनासनवर्जन-रागयुक्तस्त्रीकथा-वर्जन-स्त्रीमनोहरेन्द्रियाद्यवयवविलोकनवर्जन-पूर्वकृतरतानुस्मरणवर्जन-प्रणीतरसभोजनवर्जनलक्षणा भावनाः पञ्च चतुर्थव्रतस्य भवन्ति।

स्त्रीपशुपण्डकसंसक्तवेश्मनि शय्यासनादिवर्जनरूपत्वं प्रथमभावनाया लक्षणम्।

रागयुक्तस्त्रीकथावर्जनरूपत्वं द्वितीयभावनाया लक्षणम्।

स्त्रीणां मनोहराङ्गोपाङ्गाद्यवयवानामवलोकनवर्जनरूपत्वं तृतीयभावनाया लक्षणम्।

पूर्वानुभूतकामानुस्मरणवर्जनरूपत्वं चतुर्थभावनाया लक्षणम्।

प्रमादजनकप्रणीतरसभोजनवर्जनरूपत्वं पञ्चमभावनाया लक्षणम्।

अथ पञ्चमव्रतभावनापञ्चकं समूहरूपेणोच्यते,—

पञ्चेन्द्रियार्थानां स्पर्शरसगन्धवर्णशब्दानां मनोज्ञानां प्राप्तौ गार्ध्यस्य वर्जने सति अमनोज्ञानां तेषां प्राप्तौ द्वेषवर्जनरूपत्वमाकिञ्चन्यलक्षणपञ्चमव्रतभावनाया लक्षणम्।

पञ्चानां महाव्रतानां भावनाप्रतिपक्षोऽपि अनया रीत्या भावनीयः । तथाहि — हिंसको नाम नित्योद्वेजनीयो नित्यवैरानुबन्धैरिहैव वधबन्धादिपरिक्लेशान् प्राप्नुयात् । परत्र चाऽशुभाङ्गोपाङ्गो गर्हितगतिश्च भवेत् । ततो हिंसाया व्युपरमः श्रेयान् ।

अनृतवादी चाश्रद्धेय इहैव जिह्वोच्छेदादिकं प्राप्नोति । परत्र चांशुभाङ्गोपाङ्गो गर्हितगतिकश्च भवति । ततोऽनृताद् व्युपरमः श्रेयान् ।

परद्रव्यहरणप्रसक्तः सर्वस्याविश्वासभाजनं भवति । इहैवाभिघातवधबन्धनहस्तपादकर्णनासाच्छेदनभेदनसर्वस्वहरणादिकष्टं लभते । परत्र चाशुभाङ्गोपाङ्गो गर्हितगतिकश्च भवति । ततोऽदत्तादानाद् व्युपरमः श्रेयान् ।

अब्रह्मचारी च विभ्रमोद्भ्रान्तचित्तः प्रकीर्णेन्द्रियो मदान्धगज इव निरङ्कुशो मोहाभिभूतः कार्याऽकार्यानभिज्ञो न किञ्चिदकुशलं नारभते । परदाराभिगमकृतांश्चेहैव वैरानुबन्धजनितलिङ्गच्छेदनबन्धनद्रव्यापहारादीन् अपायान् लभते । परत्र चाशुभाङ्गोपाङ्गो गर्हितगतिकश्च भवति । ततोऽब्रह्मव्युपरमः श्रेयान् ।

तथा परिग्रहवान् शकुनिरिव मांसपेशीहस्तोऽन्येषां क्रव्यादशकुनानामिहैव तस्करादीनां गम्यो भवति । अर्जनरक्षणव्ययकृतांश्च दोषान् लभते । इन्धनैरग्निरिव नाऽस्य

तृप्तिर्भवति । कार्याऽकार्यानपेक्षो भवति । परत्र चाशुभाङ्गोपाङ्गो लुब्धकोऽयमिति गर्हितवचनो भवति । ततो महाक्लेशकारणात् परिग्रहाद् व्युपरमः श्रेयान् ।

अथवा हिंसादिषु दुःखमेव केवलं भवतीति प्रतिपक्षभावनया भावनीयम् ।

तत्र दुःखं नामानिष्टसंयोगनिमित्तकं शरीरमनःपीडात्मकं व्यापत्तिपर्यवसानमिति । तच्च सत्त्वानामप्रियं वधबन्धनच्छेदनपाटनादिहेतुकं भवति । ततश्च हिंसादिषु दुःखमेव भवतीति फलितार्थः ।

किञ्च, तादृशमहाव्रतस्थैर्यार्थं मैत्रीप्रमोदकारुण्यमाध्यस्थ्यलक्षणाश्चतस्रो भावना अपि भावनीयाः ।

कृतकारितानुमतिविशिष्टयोगैरन्येषां बाधानुत्पत्तिविषयकचिन्तनरूपत्वं, 'केनापि पापं न कर्त्तव्यं, कोऽपि दुःखी मा भवतु, सर्वेषां च मुक्तिर्भवतु' इत्याकारचिन्तनरूपत्वं वा मैत्रीभावनाया लक्षणम् ।

सम्यग्ज्ञानतपोऽधिकसाधुजनेषु परात्मोभयकृतपूजाजनितसर्वेन्द्रियाभिव्यक्तमनःप्रहर्षलक्षणप्रमोदरूपत्वम्, सम्यग्ज्ञानादिगुणाधिकसाधुजनेषु प्रसन्नमुखादितयाऽभिव्यज्यमानान्तरिकभक्तिरागरूपत्वं वा प्रमोदभावनाया लक्षणम् ।

क्लिश्यमानेषु अनुग्रहात्मकपरिणामरूपत्वं कारुण्यभावनाया लक्षणम् ।

क्रूरकर्मलक्षणाऽविनीतेषूदासीनतालक्षणात्मपरिणामरूपत्वं माध्यस्थ्यस्य लक्षणम् ।

अपि च, जगत्स्वभावः संवेगार्थं भावनीयः, वैराग्यार्थं तु कायस्वभावः ।

उत्पादव्ययध्रौव्यात्मकत्वं, प्रियविप्रयोगेप्सिताऽलाभदारिद्र्यदौर्भाग्यदौर्मनस्यबन्धनाभियोगाऽसमाधिदुःखसंवेदनरूपत्वम्, 'चतसृषु गतिषु जीवा नानाविधदुःखं भुक्त्वा भुक्त्वा परिभ्राम्यन्ति' न च किञ्चिन्नियतमस्ति, जलबुद्बुदोपमं च जीवितम्, विद्युत्प्रकाशवच्चला विभूतिः' इत्यादिचिन्तनरूपत्वं वा जगत्स्वभावस्य लक्षणम् ।

संसारभीरुत्वादिचिन्तनरूपत्वं संवेगस्य लक्षणम् ।

तथा च जगत्स्वभावचिन्तनं संवेगाय भवति ।

अनित्यत्वाऽशुचित्वपूतिगन्धित्वनिःसारतादिचिन्तनरूपत्वं कायस्वभावस्य लक्षणम् ।

सांसारिकविषयवैमुख्यलब्धकषायोपशमस्य बाह्याभ्यन्तरोपधिषु अनभिष्वङ्गरूपत्वं, सांसारिकभोगविषयकमूर्च्छारहितत्वं वा वैराग्यस्य लक्षणम् ।

॥ इति निरूपिता भावना ॥

अथ च व्रतिलक्षणं कथ्यते—

निःशल्ययुक्तत्वे सति प्राणातिपातादिविरतियुक्तत्वं व्रतिनो लक्षणम् ।

अत्र च लक्षणघटकशल्यपदार्थो निगद्यते —

क्लेशज्वरस्वरूपवत्वे सति संयमस्वरूपभेदित्वं शल्यस्य लक्षणम् ।

तच्च शल्यं त्रिविधम्, मायानिदानमिथ्यादर्शनभेदात्। तत्र च मायाशल्यं प्रसिद्धमस्ति। निदानशल्यं तु निगद्यते—

चक्रवर्त्तिकेशवादीनां सौभाग्यादिगुणसंपदं विलोक्य भूरितपआचरितपरिखेदितमानसोऽध्यवस्यति, 'ममापि अमुष्य तपसः प्रभावादेवंविधा भोगा भवन्तु' इति चिन्तनलक्षणनिदानकरणरूपत्वं, मौक्तिकसुखप्रतिबन्धपूर्वकसांसारिकसुखविषयकचिन्तनरूपत्वं वा निदानशल्यस्य लक्षणम् ।

तत्त्वार्थाऽश्रद्धानरूपत्वं मिथ्यादर्शनशल्यस्य लक्षणम्।

तदभाववत्त्वं निःशल्यस्य लक्षणम् ।

स च व्रती द्वेधा, अगारि-अनगारिभेदात्। तत्राऽगारो नाम वेश्म, तदुपलक्षितारम्भो वा ।

सम्यग्दर्शनसंपन्नत्वे सति अणुव्रतगुणव्रतशिक्षाव्रतानां मध्येऽन्यतमेन केनचित् सर्वेण वा युक्तत्वं, सम्यग्दर्शनसंपन्नत्वे सति स्थूलप्राणातिपातविरतिरूपत्वं, प्रतिपन्नसम्यक्त्वाणुव्रतत्वे सति यतिभ्यः सकाशात् साधुश्रावकाणां सामाचारीश्रवणशीलत्वं वा अगारिणो लक्षणम् ।

दीक्षादिवसादारभ्य तपश्चरणशीलत्वे सति सकल-

सावद्ययोगविरतियुक्तत्वे च सति गुरूपदेशपूर्वकस्वाध्या-याद्दिकं यथाशक्तिकरणशीलत्वमनगारिणो लक्षणम्।

तत्राऽनगारिणां पञ्च महाव्रतानि पञ्चविंशतिभावना-युक्तानि यानि भवन्ति तानि प्रतिपादितानि। अगारिणां तु द्वादश व्रतानि। तत्र च पञ्चाणुव्रतानि, त्रीणि गुणव्र-तानि, चत्वारि शिक्षाव्रतानि च। सङ्कलने जातानि द्वाद-श व्रतानि।

तत्रोक्तानि अणुव्रतानि। गुणव्रतशिक्षाव्रतानि तूच्यन्ते।

तिर्यगूर्ध्वाधो दशानां दिशां यथाशक्तिगमनविषय-कपरिमाणाभिग्रहरूपत्वं दिग्व्रतस्य लक्षणम्।

चतुर्विधाहारगन्धमाल्यादिप्रावरणादिशयनासनगृह-यानवाहनादीनां बहुसावद्यानां परित्यागपूर्वकमल्पसाव-द्यानामपि परिमाणकरणरूपत्वं, भोगोपभोगयोर्वस्तुनो यथाशक्ति संख्याविषयकनियमकरणरूपत्वं वा भोगोपभो-गस्य लक्षणम्।

असत्युपकारे पापादाननिमित्तनिवृत्तिरूपत्वं, धर्मार्थ-काममोक्षलक्षणपुरुषार्थाऽसाधकत्वं वा अनर्थदण्डस्य लक्ष-णम्।

॥ इति कथितानि गुणव्रतानि ॥

अथ शिक्षाव्रतानि प्रतिपाद्यन्ते —

* कालविशेषं नियम्य सर्वसावद्ययोगविरतिरूपत्वं सामायिकस्य लक्षणम् ।

पूर्वगृहीतभोगोपभोगयोर्दिग्व्रतविषयकप्रमाणस्य च संक्षेपकरणरूपत्वं, सर्वव्रतविषयकसंक्षेपकरणरूपत्वं वा देशावकाशिकस्य लक्षणम् ।

अष्टम्यादितिथिं प्रतिज्ञाय चतुर्विधाहारादिस्नानानुलेपनगन्धमाल्यालङ्कारादिसावद्यमूलकव्यापाराद्यब्रह्मचर्याद्यन्यतमानां सर्वेषां वा सर्वथा निषेधे सति धर्मजागरिकापरत्वं पौषधस्य लक्षणम् ।

न्यायागतकल्पनीयान्नपानादिद्रव्याणां देशकालश्रद्धासत्कारपूर्वकं परया भक्त्या संयतेभ्यः प्रदानमतिथिसंविभागस्य लक्षणम् ।

प्रसङ्गतः सम्यक्त्वाद्यणुव्रतसंपन्नस्य श्राद्धस्याऽन्यदपि यत्कर्त्तव्यं तदुपदिश्यते—

कालसंहननदौर्बल्यादिदोषाद् धर्मावश्यकपरिहाणिं ज्ञात्वाऽवमौदर्यचतुर्थषष्ठाष्टमभक्तादिभिरात्मानं संलिख्य संयमं प्रतिपद्य महाव्रतसंपन्नश्चतुर्विधाहारं प्रत्याख्याय यावज्जीवमनुप्रेक्षालक्षणभावनापरः स्मृतिसमाधियुक्तो मार-

---

* स च कालोऽन्तर्मुहूर्तलक्षणः ।

णान्तिकीं संलेखनां यो जोषयति—सेवते स उक्तपार्थस्याराधको भवति।

अथ च मारणान्तिकीसंलेखनायाः स्वरूपं प्रतिपाद्यते—

मरणं द्विविधम्, आवीचिमरणसर्वायुःक्षयलक्षणमरणभेदात्। अत्रावीचिमरणं न गृह्यते, प्रयोजनाऽभावात्, किन्तु सर्वायुःक्षयलक्षणं मरणं गृह्यते। तदेव मरणमन्त इति मरणान्तः। तत्र भवा मारणान्तिकी।

शरीरकषायादिकं संलिख्यते तनूक्रियतेऽनया सा संलेखना। लक्षणं तु निगद्यते,—

तद्भवमरणप्रयोजनत्वे सति सम्यक्तया शरीरकषायादीनां तनूकरणरूपत्वं मारणान्तिकीसंलेखनाया लक्षणम्।

सा च द्वेधा, द्रव्यभावभेदात्।

सर्वविपर्योन्मादमूलहेतुसर्वधातूनांमाहारादित्यागपूर्वकशोषणरूपत्वं द्रव्यसंलेखनाया लक्षणम्।

रागद्वेषकषायलक्षणमोहादीनां निवारणरूपत्वं भावसंलेखनाया लक्षणम्।

एतानि पूर्वोक्तानि सम्यक्त्वमूलानि द्वादश व्रतानि अभ्यसनीयानि भवन्ति। तेषु स्खलनायामतिचारा भवेयुः। अतस्तेषामतिचाराणां स्वरूपं प्रतिपाद्यते।

शङ्काकाङ्क्षाविचिकित्साऽन्यदृष्टिप्रशंसातत्संस्तवलक्षणाः पञ्चातिचाराः सम्यग्दृष्टेर्भवन्ति।

केवलागमगम्येषु अत्यन्तसूक्ष्मजिनोक्तपदार्थेषु संशयकरणरूपत्वं शङ्कातिचारस्य लक्षणम् ।

इहलौकिकपारलौकिकभोगोपभोगाविषयकाऽभिलाषारूपत्वमाकाङ्क्षातिचारस्य लक्षणम् ।

'इदमप्यस्ति किञ्चित्' इत्याकारकविभ्रमरूपत्वम्, 'इदमप्यस्तीदमपि' इत्याकारकमतिविप्लवरूपत्वं वा विचिकित्सातिचारस्य लक्षणम् ।

अभिगृहीतादिमिथ्यात्ववतां क्रियावाद्यादीनां प्रशंसाकरणम्, क्रियावाद्यादिपाखण्डिनां मनसा ज्ञानादिगुणप्रकर्षोद्भावनं वाऽन्यदृष्टिप्रशंसातिचारस्य लक्षणम् ।

तेषां पाखण्डिनां वचनद्वारा भूताभूतगुणोत्कीर्त्तनरूपत्वमन्यदृष्टिसंस्तवलक्षणातिचारस्य लक्षणम् ।

वधबन्धच्छेदादिकभारारोपणान्नपानादिनिरोधलक्षणाः पञ्चातिचाराः प्रथमाणुव्रतस्य भवन्ति ।

स्थावरादीनां वधकरणरूपत्वं वधलक्षणातिचारस्य लक्षणम् ।

त्रसानां बन्धनरूपत्वं बन्धलक्षणातिचारस्य लक्षणम् ।

वृक्षादीनां त्वक्छेदकरणरूपत्वं छेदलक्षणातिचारस्य लक्षणम् ।

पुरुषहस्त्यश्वगोमहीषादीनामधिकभारारोपणरूपत्वमधिकभारारोपणस्य लक्षणम् ।

तेषामेवाऽन्नपानादीनां प्रतिषेधकरणरूपत्वमन्नपान-निरोधलक्षणातिचारस्य लक्षणम् ।

मिथ्योपदेशरहस्याभ्याख्यानसहसाभ्याख्यानकूट-लेखविश्वस्तमन्त्रभेदलक्षणाः पञ्चातिचारा द्वितीयाणुव्रतस्य भवन्ति ।

पापजनकोपदेशकरणरूपत्वं, परेण स्वयं वाऽन्यस्याति-संधानरूपत्वं वा मिथ्योपदेशस्य लक्षणम् ।

गुह्यप्रकाशनरूपत्वं, रहस्येनासदध्यारोपणरूपत्वं वा रहस्याभ्याख्यानस्य लक्षणम् ।

अनालोच्य 'चौरस्त्वम्, 'पारदारिकोऽयम्' इत्यसद्व-चनरूपत्वं सहसाभ्याख्यानस्य लक्षणम् ।

अन्यसदृशाक्षरमुद्राकरणरूपत्वं, परप्रयोगाधीनतया-ऽन्येनाऽनुक्तस्यापि वचनस्य लेखकरणरूपत्वं वा कूट-लेखस्य लक्षणम् ।

विश्वासमुपगतानां जनानां विचारलक्षणमन्त्रस्य प्रकाशकरणं विश्वस्तमन्त्रभेदस्य लक्षणम् ।

न्यासीकृतहिरण्यादीनामपलपनं न्यासापहारस्य लक्षणम् ।

स्तेनप्रयोग-तदाहृतादान-विरुद्धराज्यातिक्रम-प्रतिरूप-कव्यवहार-हीनाधिकमानोन्मानलक्षणाः पञ्चातिचारास्तृ-तीयाणुव्रतस्य भवन्ति ।

चौर्यक्रियायां चौरस्य प्रेरणाकरणरूपत्वं स्तेनप्रयोगस्य लक्षणम् ।

चौरेणाहृतद्रव्यस्य मुधा क्रयेण वा ग्रहणं तदाहृतादानस्य लक्षणम् ।

राज्यमर्यादामुल्लङ्घ्याऽन्यप्रकारेणादानरूपत्वं विरुद्धराज्यातिक्रमस्य लक्षणम् ।

कुत्सितद्रव्यस्याऽपि सुवर्णरूप्यादिसदृशवर्णादियुक्तं कृत्वा लोके सुवर्णरूप्यादिव्यवहारकरणरूपत्वं, कृत्रिमसुवर्णादिकं निष्पाद्य लोके सत्यसुवर्णादिव्यवहारकरणरूपत्वं वा प्रतिरूपकव्यवहारस्य लक्षणम् ।

कूटतुलमानाभ्यां परप्रतारणार्थं कूटक्रयविक्रयलक्षणव्यवहारकरणरूपत्वं कूटक्रयविक्रयस्य लक्षणम् ।

अन्यविवाहकरणेत्वरगमनपरगृहीतागमनाऽनङ्गक्रीडातीव्रकामलक्षणाः पञ्चातिचाराश्चतुर्थव्रतस्य भवन्ति ।

स्वापत्यव्यतिरिक्तस्य कन्याफललिप्सया स्नेहसंबन्धेन वा विवाहकरणमन्यविवाहकरणस्य लक्षणम् ।

सातावेदनीय-चारित्रमोहनीयोदये सति अग्निदेवादिसाक्षिपूर्वकपाणिग्रहणरूपत्वं विवाहस्य लक्षणम् ।

प्रतिपुरुषगमनशीलायां साधारणस्त्रियां किञ्चित्कालं भाटिप्रदानादिना ग्रहणपूर्वकगमनरूपत्वमित्वरगमनस्य लक्षणम् ।

योनिप्रजननलक्षणस्थानं त्यक्त्वाऽन्यत्राऽनेकविध-

राविकरणरूपत्वं, वेदमोहनीयोदये सति वक्ष्यद्रागजनक-क्रीडाकरणरूपत्वं वाऽनंङ्गक्रीडाया लक्षणम्।

कामविषयकप्रवृद्धपरिणामरूपत्वं वा, कामविषयक-प्रकर्षमाप्ताभिनिवेशरूपत्वं वा, योनिमुखकक्षारूपस्थाना-न्तरे प्रजननं निक्षिप्य महद्वेळायां चटकः चटकायामिव निश्चलो मृत इवास्ते; मुहुर्मुहुश्च स्त्रियामारोहकरणमि-त्यादिकृतिसनविषयसेवनरूपत्वं वा तीव्रकामस्य लक्षणम्।

क्षेत्रप्रमाणातिक्रम-वास्तुप्रमाणातिक्रम-हिरण्यसुवर्ण-प्रमाणातिक्रम-धनधान्यप्रमाणातिक्रम-दासीदासप्रमाणा-तिक्रमलक्षणाः पञ्चातिचाराः पञ्चमाणुव्रतस्य भवन्ति।

अत्र क्षेत्रप्रमाणातिक्रमलक्षणप्रथमातिचारान्तर्गतस्य क्षेत्रस्य स्वरूपमुच्यते।

आकाशभूमिपतितोत्पन्नोदकनिष्पाद्यसस्योत्पत्तिस्था-नरूपत्वं क्षेत्रस्य लक्षणम्।

तस्य यावत्प्रमाणा प्रतिज्ञा कृता तस्या यदुल्लङ्घनं तद्रूपत्वं क्षेत्रप्रमाणातिक्रमस्य लक्षणम्।

वास्तु नाम गृहादि, तच्च त्रिविधम्। खातोच्छ्रित-खातोच्छ्रितभेदात्। तत्र खातं भूमिगृहादिकं, उच्छ्रितं प्रासादादिकं, खातोच्छ्रितं भूमिगृहस्योपरिगृहादिसन्नि-

१ तीव्रवेदोदये सति पुरुषस्य पुरुषस्त्रीनपुंसकसेवनेच्छा, स्त्रियाः पुरुषस्त्रीनपुंसकसेवनेच्छा, एवं नपुंसकस्य हस्तकर्मादि-रूपा इच्छा; साऽनङ्गक्रीडा।

वेशः। तस्य वास्तुरूपस्य यावत्प्रमाणा प्रतिज्ञा कृता, तस्या यदुल्लङ्घनं तद्रूपत्वं वास्तुप्रमाणातिक्रमस्य लक्षणम्।

हिरण्यसुवर्णं तु प्रसिद्धं घटिताऽघटिताऽनेकप्रकारम्। एवं रत्नमणिहीरकादिकं रजतादिकं च ग्राह्यम्। तेषां यावत्प्रमाणा प्रतिज्ञा, तस्या यदुल्लङ्घनं तद्रूपत्वं हिरण्यसुवर्णप्रमाणाऽतिक्रमस्य लक्षणम्।

धनं गोमहिषाऽजाऽविकाकरभतुरङ्गकरिप्रभृतिकं ग्राह्यम्। धान्यं गोधूमव्रीहियवादिकं चतुर्विंशतिप्रकारं ग्राह्यम्। तेषां यावत्प्रमाणा प्रतिज्ञा कृता, तस्या यदुल्लङ्घनं तद्रूपत्वं धनधान्यप्रमाणातिक्रमस्य लक्षणम्।

दासीदासाः कर्मकरास्तेषां यावत्प्रमाणा प्रतिज्ञा कृता, तस्या यदुल्लङ्घनं तद्रूपत्वं दासीदासप्रमाणातिक्रमस्य क्षलणम्। एवं कुप्य-कांस्य-ताम्र-सीसक-त्रपु-मृद्भाण्डादिप्रतिज्ञाऽपि ग्राह्या।

स्मृत्यन्तर्धानोर्ध्वव्यतिक्रमाधोव्यतिक्रमतिर्यग्व्यतिक्रमक्षेत्रवृद्धिलक्षणाः पञ्चातिचाराः प्रथमगुणव्रतस्य भवन्ति। अतिव्याकुलत्व-प्रमादवत्त्व-मत्यपाटवादिना विस्मरणरूपत्वं स्मृत्यन्तर्धानस्य लक्षणम्।

पर्वततरुशिखरारोहणविषयककृतनियमस्यातिक्रमरूपत्वमूर्ध्वव्यतिक्रमस्य लक्षणम्।

अधोलौकिकग्रामभूमिगृहकूपादिविषयककृतनियमस्यातिक्रमकरणमधोदिग्व्यतिक्रमस्य लक्षणम्।

तिर्यग्योजनादिविषयककृतनियमस्यातिक्रमकरण-रूपत्वं तिर्यग्दिग्व्यतिक्रमस्य लक्षणम् ।

एकतो योजनशतपरिमाणाभिगृहीतायामन्यतो दश-योजनपरिमाणाऽभिगृहीतायां सत्यां कारणवशाद् योज-नशतमध्यात् कतिपययोजनानि निष्काष्य दशयोजनेषु प्रक्षिप्य लोभावेशाद् वृद्धिकरणरूपत्वं, अभिगृहीतायाः काष्ठाया लोभावेशादाधिक्यकरणं वा क्षेत्रवृद्धेर्लक्षणम् ।

सचित्त-सचित्तसंबन्ध-सचित्तसंमिश्राभिषवदुष्पकल-क्षणाः पञ्चातिचारा द्वितीयगुणव्रतस्य भवन्ति ।

कन्दमूलफलादीनां भक्षणं सचित्ताहारस्य लक्षणम् । अत्र पृथ्वीकायादयोऽपि सर्वे ग्राह्याः ।

इह च परित्यागविषयकप्रवृत्तौ भङ्गसंभवेऽपि अति-चारकथनं कृतप्रतिज्ञस्यानाभोगादिना ज्ञातव्यम् ।

सचेतनवृक्षादिना संबद्धगुन्दादिपक्वफलादिसचि-त्तान्तर्बीजकखर्जूरादीनामनाभोगादिना भक्षणरूपत्वं स-चित्तसंबद्धाहारस्य लक्षणम् । सचित्ताहारविषयककृत-प्रतिज्ञस्यानाभोगादिना प्रवृत्तावतिचारः स्यात् ।

आर्द्रकदाडिमचिर्भटिकादिभिः संमिश्राणां पुरणा-दीनां तिलमिश्रयवादीनां वाऽनाभोगादिना भक्षणं सचि-त्तमिश्राहारस्य लक्षणम् । अत्रापि व्रतमपेक्ष्यातिचारः स्यात् ।

अनेकद्रव्यसंधाननिष्पन्नानां सुरासौवीरकादीनां मांसप्रकारखण्डानां वाऽनाभोगादिना भक्षणमभिषवाहा-

रस्य लक्षणम् । अत्रापि सावद्याहारविषयककृतप्रतिज्ञस्या-नाभोगादिना प्रवृत्तावतिचारः स्यात् ।

अर्द्धस्विन्न-यवमुद्गगोधूमादीनामनाभोगादिना भक्षणं दुष्पक्वाहारस्य लक्षणम् । अनाभोगादिना प्रवृत्तावत्रातिचारः स्यात् ।

कन्दर्पकौकुच्यमौखर्यसंयुक्ताधिकरणोपभोगाधिकत्वासमीक्ष्याधिकरणलक्षणाऽतिचारास्तृतीयगुणव्रतस्य भवन्ति।

रागोदये सति हास्ययुक्तासभ्यवाक्प्रयोगरूपत्वं कन्दर्पस्य लक्षणम् ।

मोहनीयोदये सति हास्ययुक्तासभ्यवाग्व्यापारोपार्जनपूर्वकासभ्यकायव्यापारकरणरूपत्वं कौकुच्यस्य लक्षणम् ।

असंबद्धप्रलापित्वं मौखर्यस्य लक्षणम् ।

उदूखलशकटधनूरूपाधिकरणान्तरेण सह मुसलफालयुगशराद्यधिकरणादीनां संयोगकरणं संयुक्ताधिकरणस्य लक्षणम् ।

यावत्स्नानालङ्कारादिभिर्यस्य प्रयोजनं ततोऽधिकग्रहणरूपत्वमुपभोगाधिक्यस्य लक्षणम् ।

अनालोच्याधिकरणमसमीक्ष्याधिकरणम् ।

कायवाङ्मनोदुष्प्रणिधानाऽनादरस्मृत्यनुपस्थानलक्षणाः पञ्चातिचाराः प्रथमशिक्षाव्रतस्य भवन्ति ।

शरीरावयवानां पाणिपादादीनामनभृततावस्थापनरूपत्वं कायदुष्प्रणिधानस्य लक्षणम् ।

वर्णसंस्काराभावे सति अर्थानवगमरूपत्वं वाग्दुष्प्रणिधानस्य लक्षणम् ।

क्रोधलोभद्रोहाऽभिमानादिकार्यव्यासङ्गजन्यसंभ्रमरूपत्वं मनोदुष्प्रणिधानस्य लक्षणम् ।

सामायिकविषयानुत्साहरूपत्वमनादरस्य लक्षणम् ।

सामायिकस्य स्मृतावनुपस्थापनरूपत्वं स्मृत्यनुपस्थापनस्य लक्षणम् ।

आनयनप्रेष्यप्रयोगशब्दरूपानुपातपुद्गलक्षेपलक्षणाः पञ्चातिचाराः दैशावकाशिकस्य भवन्ति ।

संदेशकप्रदानादिना सचित्तादिवस्तूनामानयनमानयनप्रयोगस्य लक्षणम् ।

अभिगृहीतदेशव्यतिक्रमभयाद् भृत्यं प्रेष्य 'त्वया मम गवादिकमानेयम्' इति प्रेरणाकरणं प्रेष्यप्रयोगस्य लक्षणम् ।

स्वगृहभूप्रदेशाविषयकाभिग्रहकृतानन्तरमुत्पन्नप्रयोजनेऽभ्युच्छ्वासितादिकरणेन प्रबोधनरूपत्वं शब्दानुपातस्य लक्षणम् ।

एवं रीत्या स्वकीयवर्णादिना प्रबोधनरूपत्वं स्वावयवप्रदर्शनद्वारा परागमनसूचकत्वं वा वर्णानुपातस्य लक्षणम् ।

कार्यार्थिना लोष्ठकाष्ठादिकं प्रक्षिप्य आगमनसूचकत्वं पुद्गलक्षेपस्य लक्षणम् ।

अप्रत्यवेक्षिताप्रमार्जितभूमावुत्सर्गादाननिक्षेपाः, अनादरस्मृत्यनुपस्थापने चेति पञ्चातिचाराः पोषधलक्षणतृतीयशिक्षाव्रतस्य भवन्ति ।

उच्चारप्रस्रवणखेलसिङ्घाणकादीनां प्रत्यवेक्षणप्रमार्जनाभाववद्भूमौ परित्यागरूपत्वमप्रत्यवेक्षितभूमावुत्सर्गलक्षणप्रथमातिचारस्य लक्षणम् ।

यष्टिपीठफलकपात्रकम्बलादीनां प्रत्यवेक्षणप्रमार्जनमकृत्वा भूमौ ग्रहणनिक्षेपकरणरूपत्वमप्रत्यवेक्षितभूमौ ग्रहणलक्षणातिचारस्य लक्षणम् ।

दर्भकुशकम्बलवस्त्रादिलक्षणसंस्तारकस्य प्रत्यवेक्षण प्रमार्जनमकृत्वा भूमौ निक्षेपकरणरूपत्वं तृतीयातिचारस्य लक्षणम् ।

पौषधेऽनुत्साहकरणमनादरलक्षणचतुर्थातिचारस्य लक्षणम् ।

पौषधोपवासविषयकप्रतिपत्तिरूपकर्त्तव्यक्रियायां स्मृतिभ्रंशरूपत्वं स्मृत्यनुपस्थापनलक्षणपञ्चमातिचारस्य लक्षणम् ।

सचित्तनिक्षेप-सचित्तपिधान-परव्यपदेश-मात्सर्य-कालातिक्रमलक्षणाः पञ्चातिचारा अतिथिसंविभागस्य भवन्ति ।

चतुर्विधाहारस्यादेयबुद्ध्या यवगोधूमशाल्यादिषु निक्षेपकरणरूपत्वं सचित्तनिक्षेपस्य लक्षणम्।

तादृशाहारस्यादेयबुद्ध्या सुरणकन्दपत्रपुष्पादिसाचित्तेन स्थगनरूपत्वं सचित्तापिधानस्य लक्षणम्।

भिक्षाकाले समुपस्थितं प्रकटतयाऽन्नादिकं पश्यन्तं साधुमदेयबुद्ध्या 'परकीयमतो न ददामि' इति व्यपदेशकरणरूपत्वं परव्यपदेशस्य लक्षणम्।

कषाययुक्तचित्तेन प्रदानं मात्सर्यस्य लक्षणम्।

उचितो यो भिक्षाकालस्तमतिक्रम्य भिक्षाकरणरूपत्वं कालातिक्रमस्य लक्षणम्।

जीवितमरणाशंसामित्रानुरागसुखानुबन्धनिदानकरणलक्षणाः पञ्चातिचाराः संलेखनाया भवन्ति।

वस्त्रादिलाभबहुपरिवारदर्शनेन लोकश्लाघाश्रवणेन चैवमेव श्रेय इति मननरूपत्वं, अवश्यतया जलबुद्बुदरूपविनश्वरशीलस्य शरीरस्यावस्थानादौ गार्ध्येन प्रयत्नकरणं वा जीविताशंसाया लक्षणम्।

स्वकीयाऽनादरं दृष्ट्वा 'कदा म्रियेऽहम्' इति परिणामरूपत्वं, रोगग्रस्ततया प्राप्तजीवनक्लेशस्य मरणचित्तस्य प्रणिधानं वा मरणाशंसाया लक्षणम्।

जीवितमरणसहचारिमित्रजनेषु योऽयं तादृशः स्नेहस्तं तस्यामवस्थायामपि न जहातीत्येवमनुरागरूपत्वं, पूर्वे सहाचरितपांशुक्रीडनाद्यनुस्मरणे सति यः स्नेहः संजात-

स्तस्य प्राणात्ययसमयेऽपि परित्यागविमुखरूपत्वं वा मित्राऽनुरागस्य लक्षणम् ।

अनुभूतप्रिया विशेषस्मृतिसमन्वाहाररूपत्वं सुखानुबन्धस्य लक्षणम् ।

कष्टानुष्ठानरूपतपसश्चारित्रस्य वा विक्रयकरणरूपत्वम् , 'यदि अस्य तपसश्चारित्रस्य वा मम फलमस्ति तर्हि जन्मान्तरे चक्रवर्त्यादीनां सुखं भवतु' इतीच्छारूपत्वं वा निदानस्य लक्षणम् ।

तत एतेषु व्रतशीलव्यतिक्रमस्थानेषु पञ्चषष्ट्यतिचारेष्वप्रमादो न्याय्यः ।

अथ च प्रसङ्गात् दानस्वरूपं प्रतिपाद्यते—

आत्मपरानुग्रहार्थं परमविशुद्धपरिणामेन स्वद्रव्याणामन्नपानवस्त्रपात्रादीनां परित्यागकरणं दानस्य लक्षणम् ।

तच्च दानं विधिविशेषाद् , द्रव्यविशेषाद् , दातृविशेषात्, पात्रविशेषाच्च विशिष्टं भवति । अथ च दानस्य विशेषे सति फलस्याऽपि विशेषो भवतीति ज्ञातव्यम् ।

तेषां लक्षणं निगद्यते-

देशकालसंपच्छ्रद्धानादिक्रमरूपत्वं विधिविशेषस्य लक्षणम् ।

तत्र देशसंपद् नाम स्थावरादिजन्तुजातरहितकोशः । कालसंपद् नाम न रात्रौ दिवाऽपि स्वार्थमुपक्लृप्तेऽशनादौ उचितभोजनकालः परिवेषकोपस्थितिरूपश्च । अत्र च पूर्व-

पश्चात्कर्माभावोऽपि अपेक्षितः ।

श्रद्धा नाम गुणवत्सु दानाभिलाषरूपा ।

सत्कारो नाम अभ्युत्थानासनप्रदानादिस्वरूपः प्रह्वपुरःसरप्रदेयरूपश्च ।

अन्नादिद्रव्याणामेव सारजातिगुणोत्कर्षयोग्यतासंपन्नरूपत्वं द्रव्यविशेषस्य लक्षणम् । अत्र च सारो नाम अविच्युतगन्धरसादिरूपः ।

जातिर्नाम शालिव्रीहिगोधूमादिरूपा । गुणो नाम सुरभिलवणस्निग्धमधुरत्वादिरूपः । तेषां सारादीनामुत्कृष्टत्वं तस्य योग्यता तया संपन्नरूपत्वमित्यर्थः ।

प्रतिग्रहीतरि अनसूयारूपत्वे सति त्यागादौ विषादाभावरूपत्वं दातृविशेषस्य लक्षणम् ।

सम्यग्दर्शनज्ञानचारित्रसंपन्नरूपत्वं पात्रविशेषस्य लक्षणम् ।

तादृग्दानस्य फलमपि विशिष्टं, विशिष्टतरं, विशिष्टतमं च मोक्षपर्यवसानं भवति ।

इति ए-एम्-ए-एस्-वीत्युपाधियुक्त-शास्त्रविशारद-जैनाचार्य-श्रीमद्विजयधर्मसूरीश्वरचरणारविन्दभृङ्गायमाणेन न्यायतीर्थ-न्यायविशारदोपाधियुक्तेन प्रवर्त्तकश्रीमङ्गलविजयेन विरचिते जैनतत्त्वप्रदीपाख्ये ग्रन्थे आस्रवतत्त्ववर्णननामा तृतीयोऽधिकारः समाप्तिमगमत् ॥



# चतुर्थोऽधिकारः ।

अभिहितो लक्षणविधानाभ्यां कायवाङ्मनःकर्मयोग-लक्षण आश्रवः । अधुना बन्धः प्रतिपाद्यते—

मिथ्यादर्शनाविरतिकषाययोगा इति पञ्च बन्धहेतवो भवन्ति ।

तत्र मिथ्यात्वं नाम तत्त्वार्थाश्रद्धानलक्षणं सम्यग्दर्शनविपरीतरूपमुक्तमेव ।

मत्यज्ञानादिना परिकल्पयतोऽसम्यग्दर्शनपरिग्रह-विषयको योऽयं 'तदेव सत्यम्' इत्यभ्युपगमः, तत्प्रातिपत्त्या गृहीतमिथ्यात्वरूपत्वं, मत्यज्ञानादिनाऽभ्युपेत्यासम्यग्दर्शनविषयकपरिग्रहरूपत्वं वाऽभिगृहीतमिथ्यात्वस्य लक्षणम् ।

तादृग्मिथ्यात्वं येषां सन्तीति मिथ्यात्विनः । ते च त्रिषष्ट्युत्तरशतत्रयसंख्याका भवन्ति । तथाहि—सप्तषष्टिरज्ञानवादिनां सुगतशिष्यप्रभृतीनां भेदाः सन्ति । साकल्य-वष्कुल-सात्यमुग्रि-चारायण-माध्यन्दिन-मौद-पिप्पलाद-वादरायण-जैमिनि-वसुप्रभृतयोऽपि ज्ञातव्याः ।

क्रियावादिनामशीत्युत्तरशतभेदाः । ते च मरीचिकुमारकपिलोलूकगार्ग्यप्रभृतयः ।

चतुरशीतिभेदा अक्रियावादिनाम् । ते च कौकलकाण्ठेविद्धि-कौशिकप्रभृतयः ।

द्वात्रिंशद्भेदा विनयवादिनाम् । ते च वशिष्ठ-पाराशर-जातुकर्ण-वाल्मीक-रोमहर्ष-सत्यदत्त-व्यास-इलापुत्रप्रभृतयः।

अभिगृहीतमिथ्यात्वादन्यद् यन्मिथ्यात्वं तदनभिगृहीतादिकम् । तदपि तत्त्वार्थाश्रद्धानरूपं भवति ।

पूर्वोक्तविरतिलक्षणाद् विपरीतरूपत्वमविरतेर्लक्षणम् ।

संसारप्राप्तिनिमित्तरूपत्वं कषायस्य लक्षणम् ।

योगस्तु पञ्चदशविधः प्रमादोऽपि । अत्र यद्यपेक्षितः, तर्हि सोऽपि उच्यते । लक्षणतो यदि कषायादिष्वन्तर्भूतः, तर्हि तेषां लक्षणकथनेन सोऽपि संगृहीतो भवति ।

स्मृत्यनवस्थाने सति कुशलेष्वनादररूपत्वे च सति योगदुष्प्रणिधानरूपत्वं प्रमादस्य लक्षणम् । तस्य च प्रमादस्य पञ्च प्रकाराः सन्ति मद्य-विषय-कषाय-विकथा-निद्रारूपाः । एषां मिथ्यादर्शनादीनां बन्धहेतूनां पूर्वेषां सद्भावे सति उत्तरेषां नियतभावः। उत्तरोत्तरसद्भावे तु पूर्वेषां भजना अनियतभाव इत्यर्थः ।

अथ बन्धहेतुप्रतिपादितं श्रुत्वा पर उत्कर्णायते-हस्ताद्यभावे सति आदानशक्तिविरहात् कथममूर्तस्यात्मनः कर्मग्रहणं प्रति व्यापारः? । उच्यते, इयमेव तावदस्थानारेका

१ कष्यन्ते-पीड्यन्ते प्राणिनः परस्परं यस्मिन्नसौ कषः संसारः, तमयन्ते प्राप्नुवन्ति जन्तवोऽनेनेति कषायः क्रोध-मान-माया-लोभरूपः ।

जैनप्रक्रियानभिज्ञस्य देवानांप्रियस्य, केनात्मनोऽमूर्तताभ्युपेता ? कर्मजीवसंवन्धस्याऽनादित्वादेकत्वपरिणामे सति क्षीरोदकवद् वह्न्ययोगोलकवद् वा मूर्त एवात्मा, कार्मणशरीरसंवन्धात् कर्मग्रहणे व्याप्रियते । अतो नास्ति शङ्काकरणसमयः । सकषायत्वलक्षणहेतुना जीवः कर्मणो योग्यान् पुद्गलान् गृह्णाति ।

स्यादेतत्, पूर्वं सामान्यवन्धहेतुग्रहणे कषायोऽपि गृहीत एव, पुनः किमर्थं गृह्यते ? इति शङ्कायां समाधीयते-

वन्धहेतौ कषायाणां प्राधान्यख्यापनार्थं पुनः कषायपदमुपात्तम् । अथवा, कषायेषु सत्सु तीव्रमन्दमध्यमाशयानुरूपस्थित्यनुभागो भवतीति विशेषप्रतिपत्त्यर्थं पुनः कषायपदं गृहीतम् ।

वन्धनं वन्धः, कर्मयोग्यपुद्गलानां परस्परमाश्लेषः, अथवा प्रकृत्यादिना वध्यते-अस्वातन्त्र्यमापद्यते आत्मा स वन्धः पुद्गलपरिणामः क्षीरोदकवत् । स चात्मप्रदेशेषु रागाद्यभ्यञ्जनेषु कर्मयोग्यपुद्गलानामाश्लेषमात्रत्वेन यो वन्धः स एव वन्धपदार्थः । तथा च मिथ्यात्वादिवन्धहेतुवशादार्द्रीकृतचेतसः सर्वतो योगविशेषात् सूक्ष्मैकक्षेत्रावगाह्यनन्तप्रदेशानां कर्मयोग्यानां वर्गणानामुपश्लेषरूपत्वं वन्धसामान्यस्य लक्षणम् ।

रागादिस्नेहाभ्यञ्जनस्यात्मनोऽपूर्वकर्मग्रहणयोग्यताधारकत्वं कार्मणशरीरपरिणामस्य लक्षणम् ।

तथा च आत्मशरीरयोः कथञ्चिदैक्यादनाभोगवीर्यतः कर्मबन्धो भवति। स एव कार्मणशरीरपुद्गलग्रहणकृतो बन्धश्चतुर्विधः।

लक्षणतः प्रतिपादितो बन्धः, संप्रति विधानत उच्यते—

उक्तलक्षणो बन्ध एकोऽपि कार्यभेदात् प्रकृत्यादिविभागमासादयति। यथा मनुष्यः क्रौर्यनीचैस्त्वादिलक्षणकार्यभेदान्नानात्वं प्रतिपद्यते। स च द्वेधा, द्रव्यभावभेदात्। तत्र द्रव्यबन्धस्तृणकाष्ठादिषु प्रसिद्धः। भावबन्धस्तु निगद्यते—

भावबन्धश्चतुर्विधः, प्रकृति-स्थित्यनुभाग-प्रदेशबन्धभेदात्।

अनाभोगपूर्वकाध्यवसायविशेषे सति आहारपरिणामवत् स्थित्यादिलक्षणकर्मपरिणतिरूपत्वं प्रकृतिबन्धस्य लक्षणम्। स च कर्मात्मनोरैक्यतापादनस्वरूपः।

कर्त्रा परिगृहीतपूर्वोक्तकर्मपुद्गलराशेरात्मप्रदेशेष्ववस्थानविशेषरूपत्वं स्थितिबन्धस्य लक्षणम्।

कालान्तराऽवस्थाने सति विपाकवर्तिपरिणामविशेषरूपत्वं, प्रयोगकर्मणोपात्तानां शुभाशुभकर्मप्रकृतीनां प्रकृतिस्थितिरूपाणां तीव्रमन्दाद्यनुभावतयाऽनुभवरूपत्वं वा अनुभागबन्धस्य लक्षणम्।

स चानुभागबन्धः समासादितपरिपाकावस्थस्य बद-

रादेरिवोपभोग्यसर्वघात्यघात्येकद्वित्रिचतुःस्थानिकशुभाशुभतीव्रमन्दादिभेदेन वक्ष्यमाणस्वरूपः ।

स्वप्रदेशेषु कर्मपुद्गलसंचयकरणरूपत्वं, यथोक्तनिमित्तसद्भावे सति पुद्गलादानरूपत्वं वा प्रदेशबन्धस्य लक्षणम् ।

अत्र च मोदकदृष्टान्तः परिभावनीयः । तथाहि—प्रकृतयो द्वेधा, मूलोत्तरभेदात् । मूला ज्ञानावरणादिरूपा, उत्तरास्तु मतिज्ञानावरणादिरूपाः । तेषां कालविशेषनियमनं स्थितिः, तस्या एव स्निग्धमधुरत्वाद्येकद्विगुणादिसद्भावोऽनुभागः । पुनस्तस्या एव कणिकादिवद् द्रव्यपरिणामः प्रदेशः, अर्थात् कर्मणः पुद्गलपरिणामनिरूपणं प्रदेशबन्धः । तथा च प्रत्येकात्मप्रदेशाः कर्मावयवैरनन्तानन्तकैर्बद्धाः सन्तः कर्माणि बध्नन्ति सातत्ययोगेन ।

तत्र च प्रकृत्यादिचतुर्विधबन्धेषु प्रथमभेदः प्रथमतया निरूप्यते—

मूलोत्तरभेदात् प्रकृतिबन्धो द्वेधा, तत्रापि मूलप्रकृतिभेदस्त्वष्टविधः, ज्ञान-दर्शनावरण-वेदनीय-मोहनीयायुर्नामगोत्रा-ऽन्तरायभेदात् ।

उत्तरप्रकृतिभेदस्तु सप्तनवतिविधः, अथवा अष्टपञ्चाशदुत्तरशतविधः ।

तथाहि—ज्ञानावरणः पञ्चविधः, मतिश्रुतावधिमनःपर्यायकेवलभेदात् । दर्शनावरणो नवविधः, चक्षुर-

चक्षुरवधिकेवलदर्शन-निद्रा-निद्रानिद्रा-प्रचला-प्रचलाप्रचला-स्त्यानर्द्धिभेदात्। एवं रीत्योत्तरोत्तरं वक्ष्यते।

अथ च प्रथमतः क्रमप्राप्तं पञ्चविधं ज्ञानावरणं प्रतिपाद्यते—

सामान्यविशेषात्मकवस्तुनो विशेषाववोधरूपत्वं ज्ञानस्य लक्षणम्।

तच्च ज्ञस्वभावस्यात्मनः प्रकाशरूपस्य ज्ञानावरणक्षयोपशमक्षयसमुद्भवः प्रकाशविशेषो मतिज्ञानादिव्यपदेशभाग् भवति। तस्यावारकं कर्म ज्ञानावरणनामधेयं भवति।

अष्टाविंशतिभेदभिन्नं मतिज्ञानं येनाऽऽव्रियते तन्मतिज्ञानावरणं देशघाति, लोचनपटवत्।

श्रोत्रोपलब्धिरूपश्रुतज्ञानं येनाऽऽव्रियते तच्छ्रुतज्ञानावरणम्, तदपि देशघाति भवति।

इन्द्रियाऽनिन्द्रियनिरपेक्षत्वे सति आत्मनोऽवधिज्ञानावरणक्षयोपशमजन्यपुद्गलविषयकप्रकाशाविर्भावरूपमवधिज्ञानं येनाऽऽव्रियते तदवधिज्ञानावरणम्; तदपि देशघाति।

साक्षादात्मनो मनोद्रव्यपर्यायान् निमित्तीकृत्य मनुष्यक्षेत्राभ्यन्तरवर्तिसंज्ञिपञ्चेन्द्रियमनोग्राहिप्रकाशविशेषरूपं मनःपर्यायज्ञानं येनाऽऽव्रियते तन्मनःपर्यायज्ञानावरणम्, तदपि देशघाति।

केवलज्ञानावरणक्षयसमुद्भूतमात्मप्रकाशस्वरूपं केवलज्ञानं येनाऽऽव्रियते तत्केवलज्ञानावरणम्, तच्च सर्वघाति भवति।

अथ दर्शनावरणं प्रतिपाद्यते—

पश्यत्यनेनात्मेति चक्षुः सर्वमेवेन्द्रियमात्मनः सामान्यविशेषबोधस्वभावस्य करणं तद्द्वारकं यत्सामान्यमात्रोपलम्भनमात्मपरिणतिरूपं चक्षुर्दर्शनम्, तद्घाति चक्षुर्दर्शनावरणम्, तच्च देशघाति भवति।

शेषेन्द्रियमनोविषयकमविशिष्टमचक्षुर्दर्शनं, तद्घाति कर्माचक्षुर्दर्शनावरणम्। तच्च वेत्रिसमं भवति।

अवधिदर्शनावरणक्षयोपशमसमुद्भूतमवधिदर्शनम्। साक्षादात्मनः सामान्यमात्रोपलम्भनं केवलदर्शनावरणक्षयसमुद्भूतं केवलदर्शनम्। तयोरावारकं कर्मावधिदर्शनावरणं केवलदर्शनावरणं च भवति।

सुखप्रबोधस्वभावावस्थाविशेषरूपत्वं, सुखजागरणस्वभावस्वापावस्थाविशेषरूपत्वं वा निद्राया लक्षणम्।

दुःखजागरणस्वभावस्वापावस्थाविशेषरूपत्वं, दुःखप्रतिबोधस्वापावस्थाविशेषरूपत्वं वा निद्रानिद्राया लक्षणम्।

स्थितास्थितस्वापावस्थाविशेषरूपत्वं प्रचलाया लक्षणम्।

चंक्रमणविषयकस्वापावस्थाविशेषरूपत्वं प्रचलाप्रचलाया लक्षणम्।

दिनचिन्तितार्थातिकाङ्क्षाविषयकस्वापावस्थाविशेषरूपत्वम्, जाग्रदवस्थाध्यवसितार्थसंसाधनविषयकाभिकाङ्क्षानिमित्तकस्वापाऽवस्थाविशेषरूपत्वं वा स्त्यानर्द्धेर्लक्षणम्।

अत्र निद्रादयस्तु समधिगताया दर्शनलब्धेरुपघाते प्रवर्त्तन्ते।

चक्षुर्दर्शनावरणादिचतुष्टयं तु दर्शनोद्गमोच्छेदित्वाद् मूलघातं निर्वहन्ति।

वेदनीयं द्विविधं, सदसद्वेदनीयभेदात्।

मोहनीयं मूलतो द्विविधं, दर्शनचारित्रमोहनीयभेदात्।

तत्र दर्शनमोहनीयं त्रिविधम्, सम्यक्त्व-मिश्र-मिथ्यात्वमोहनीयभेदात्।

तत्र तत्त्वार्थश्रद्धानरूपं सम्यक्त्वम्। तत्त्वार्थाश्रद्धानरूपं मिथ्यात्वम्। तदुभयस्वभावं मिश्रम्।

चारित्रमोहनीयं द्विविधम्, कषायमोहनीयनोकषायमोहनीयभेदात्।

तत्र कषायमोहनीयं चतुर्विधम्, अनन्तानुबन्ध्यप्रत्याख्यान-प्रत्याख्यान-संज्वलनभेदात्।

तदपि प्रत्येकं चतुर्विधं, क्रोध-मान-माया-लोभभेदात्।

सम्यक्त्वलक्षणात्मीयगुणप्रतिबन्धकत्वे सति संसाराऽनुबन्धनशीलत्वम्, अनन्तसंसारकारणत्वे सति मिथ्या-

त्वानुबन्धशीलत्वं वा अनन्तानुबन्धिकषायमोहनीयस्य लक्षणम् ।

यस्योदये सति अल्पमपि प्रत्याख्यानं न भवति तद्रूपत्वम्, देशविरतिप्रतिबन्धकत्वं वाऽप्रत्याख्यानकषायमोहनीयस्य लक्षणम् ।

सर्वविरतिलक्षणमूलगुणप्रतिबन्धकत्वं प्रत्याख्यानकषायमोहनीयस्य लक्षणम् ।

यथाख्यातचारित्रप्रतिबन्धशीलत्वं, समस्तपापस्थानरहितविरतिभाजोऽपि यतेर्दुःपहपरिषहसन्निपाते सति युगपत्संज्वलनशीलत्वं वा संज्वलनकषायस्य लक्षणम् ।

पर्वतराजिसदृशोऽनन्तानुबन्धी क्रोधः । तत्र पर्वतः पाषाणपुञ्जः, तदेकदेशोऽपि शिलादिविभागरूप उपचारात् पर्वत उच्यते । तस्य राजिर्नामभेदः, पर्वतस्य राजिः पर्वतराजिस्तया सदृशः पर्वतराजिसदृशः, सादृश्यं तु वक्ष्यमाणरीत्या ज्ञेयम्;-शिलायामुत्पन्ना या राजिः, सा च यावच्छिलारूपं तावदवतिष्ठते, न तस्याः संधानमस्ति, एवमनन्तानुबन्धी क्रोध उत्पन्नः सन् यावज्जीवति तावदनुवर्तते, न च तस्योपशान्तिरस्ति । तदनु मृत्वा च भूयो नरकगमनं भवति ।

तथा भूमिराजिसदृशोऽप्रत्याख्यानक्रोधः ।

---

१ अल्पप्रत्याख्यानमप्रत्याख्यानं, देशविरतिरित्यर्थः, तत्प्रतिबन्धको द्वितीयः कषायः ।

वालुकाराजिसदृशः प्रत्याख्यानक्रोधः।

उदकराजिसदृशः संज्वलनक्रोधः।

क्रोधो रोषो भण्डनं भाप इति क्रोधस्य पर्यायाः।

अत्रापि दृष्टान्तव्याख्या पूर्ववत्।

अथ शैलस्तम्भसदृशोऽनन्तानुबन्धी मानः।

अस्थिस्तम्भसदृशोऽप्रत्याख्यानो मानः।

काष्ठस्तम्भसदृशः प्रत्याख्यानो मानः।

तृणस्तम्भसदृशः संज्वलनमानः।

मानः स्तम्भो गर्व उत्सेकोऽहंकारो दर्पो मद इत्येते मानस्य पर्यायाः।

भूमिराजिसदृशादिदृष्टान्तव्याख्या तु पूर्ववत् कार्या। एवं मायाया अपि तीव्रादिभावाश्रितानि निदर्शनानि भवन्ति, तथाहि वंशमूलसदृशी, मेषविषाणसदृशी, गोमूत्रिकासदृशी, अवलेखिकासदृशी, इति क्रमेण चतसृणां मायानां दृष्टान्ता ज्ञेयाः।

अत्र चावलेखिका नाम धनुरादीनामुल्लिख्यमाना या वक्रत्वरूपा, तत्सदृशी। अत्राऽपि दृष्टान्तव्याख्या स्वयमेव व्याख्यातव्या।

एवं लोभस्यापि तीव्रादिभावाश्रितानि निदर्शनानि भवन्ति। तथाहि, लाक्षारागसदृशः, कर्दमरागसदृशः, खञ्जनरागसदृशः, हरिद्रारागसदृशः क्रमेण चतुर्णां लोभानां दृष्टान्ता ज्ञेयाः।

तेषां क्रोधादीनां प्रतिरोधका इमे क्रमेण ज्ञेयाः, तथाहि क्षमया क्रोधो जेयः, मार्दवेन मानः, आर्जवेन माया, सन्तोषेण लोभ इति ।

अत्र च मिथ्यादर्शनं द्वादश कषायाश्च सर्वघातिन्यः प्रकृतयः । संज्वलनकषायास्तु देशघातिन्यः प्रकृतयः ।

अथ नवविधो नोकषायः प्रतिपाद्यते—

यस्योदये सति जीवस्य सनिमित्तमन्यथा वा हास्योत्पत्तिः स्यात्, तद्रूपत्वं हास्यमोहनीयस्य लक्षणम् ।

यस्योदये सति बाह्याभ्यन्तरवस्तुषु आसक्तिलक्षणा प्रीतिः स्यात् तद्रूपत्वं रतिमोहनीयस्य लक्षणम् ।

यस्योदये सति शब्दादिविषयेष्वप्रीतिः स्यात् तद्रूपत्वमरतिमोहनीयस्य लक्षणम् ।

यस्योदये सति रोदनपरिदेवनादिलक्षणः शोकः स्यात् तद्रूपत्वं शोकमोहनीयस्य लक्षणम् ।

यस्योदये सति त्रासलक्षण उद्वेगः स्यात् तद्रूपत्वं भयमोहनीयस्य लक्षणम् ।

यस्योदये सति शुभाशुभद्रव्यविषयकव्यलीकाचित्तं स्यात् तद्रूपत्वं जुगुप्सामोहनीयस्य लक्षणम् ।

उद्रिक्तश्लेष्मण आम्लाभिलाषवद् यस्योदये सति अनेकाकारस्त्रीविषयकोपभोगाभिलाषः स्यात् तद्रूपत्वं पुरुषवेदमोहनीयस्य लक्षणम् ।

यस्योदये सति अनेकाकारपुरुषविषयकोपभोगाभिलाषः स्यात्, तद्रूपत्वं स्त्रीवेदमोहनीयस्य लक्षणम्।

धातुद्वयोदये मार्जितादिद्रव्याभिलाषवद् यस्योदये सति स्त्रीपुरुषाद्युभयाविषयकोपभोगाभिलाषः स्यात् तद्रूपत्वं नपुंसकवेदमोहनीयस्य लक्षणम्।

ते च हास्यादयः कषायसंपर्कशून्याः सन्तः स्वकार्यकरणासमर्थाः सदैव कषायसंसक्ता चारित्रमोहनीयव्यपदेश्याः। अल्पकषाया नोकषायाश्च तेषां पर्यायाः। ते च नोकषाया देशघातिप्रकृतिरूपा भवन्ति। इति प्रतिपादितं मोहनीयं कर्म।

अथ क्रमप्राप्तमायुष्कर्म प्रतिपाद्यते—

तच्चायुश्चतुर्विधम्, नरक-तिर्यग्-मानुष्य-देवायुर्भेदात्। लक्षणानि तु वक्ष्यन्ते।

भवाद् भवान्तरं संगच्छतां जन्तूनां नियमेन यदुदयागमनरूपत्वं, यस्मिन्नुदिते सति तद्भवप्रायोग्याणि सर्वाणि शेषकर्माणि उपभोगायागच्छन्ति तद्रूपत्वं वा आयुषो लक्षणम्।

तीव्रशीतोष्णादिवेदनाभूतनरकभूमिषु यद्धेतुकं दीर्घजीवनलक्षणमवधारणं भवति तद्रूपत्वं नरकायुषो लक्षणम्।

यस्योदये सति प्रायेण क्षुत्पिपासाशीतोष्णादिविवि-

षदुःखोत्पत्तिस्थानेषु विवसनं भवति तद्रूपत्वं तिर्यगायुषो लक्षणम् ।

यस्योदये सति प्रायेण शारीरिकमानसिकसुखदुःखनिबन्धनमनुष्येषूत्पत्तिः स्यात् तद्रूपत्वं मनुष्यायुषो लक्षणम् ।

यस्योदये सति प्रायेण सुखप्रचुरदेवेषु जन्म भवति तद्रूपत्वं देवायुषो लक्षणम् ।

॥ निरूपिताऽऽयुष्कर्मप्रकृतिः ॥

संप्रति नामकर्म निरूप्यते—

तच्च नामकर्म त्र्यधिकशतविधं, गति-जातिशरीराङ्गोपाङ्ग-बन्धन-संघातन-संस्थान-संहनन-स्पर्श-रस-गन्ध-वर्णानुपूर्वी-विहायोगति-पराघातो-च्छ्वासातपोद्योतागुरुलघु-तीर्थङ्करनिर्माणो-पघात-त्रस-बादर-पर्याप्त-प्रत्येक-स्थिर-शुभ-सुभग-सुस्वरादेययशःकीर्ति-स्थावर-सूक्ष्मापर्याप्त-साधारणास्थिराशुभ-दुर्भगदुःस्वरानादेयाऽयशःकीर्तिभेदात् ।

तत्र गतिश्चतुर्धा, नरक-तिर्यग्-मनुष्य-देवगतिभेदात् ।

जातिः पञ्चधा, एकद्वित्रिचतुष्पञ्चेन्द्रियभेदात् ।

शरीरं पञ्चधा, औदारिक-वैक्रिया-ऽऽहारक-तैजस-कार्मणभेदात् ।

बन्धनं पञ्चदशविधम्, औदारिकौदारिकबन्धनौ-दारिकतैजसबन्धनौ-दारिककार्मणबन्धन-वैक्रियवैक्रियबन्धन-

वैक्रियतैजसबन्धन-वैक्रियकार्मणबन्धना-ऽऽहारकाहारकबन्धना-ऽऽहारकतैजसबन्धना-ऽऽहारककार्मणबन्धनौ-दारिकतैजसकार्मणबन्धन-वैक्रियतैजसकार्मणबन्धना-ऽऽहारकतैजसकार्मणबन्धन-तैजसतैजसबन्धन-तैजसकार्मणबन्धन-कार्मणकार्मणबन्धनभेदात् ।

संघातनं पञ्चधा, औदारिक-वैक्रिया-ऽऽहारक-तैजस-कार्मणसंघातनभेदात् ।

संस्थानं षोढा, समचतुरस्र-न्यग्रोध-सादि-वामन-कुब्ज-हुण्डकसंस्थानभेदात् ।

संहननं षोढा, वज्रर्षभनाराच-ऋषभनाराच-नाराचा-ऽर्धनाराच-कीलिका-सेवार्तसंहननभेदात् ।

स्पर्शोऽष्टधा, मृदु-खर-गुरु-लघु-शीतोष्ण-स्निग्ध-रूक्ष-भेदात् ।

रसः पञ्चधा, तिक्त-कटु-कषाया-ऽम्ल-मधुरभेदात् ।

गन्धो द्विविधः, सुरभि-दुरभिगन्धभेदात् ।

वर्णः पञ्चधा, कृष्ण-नील-लोहित-हारिद्र-शुक्लवर्ण-भेदात् ।

आनुपूर्वी चतुर्धा, नरक-तिर्यग्-मनुष्य-देवानुपूर्वी-भेदात् ।

विहायोगतिर्द्वेधा, शुभाऽशुभविहायोगतिभेदात् ।

अथ लक्षणतो नामकर्म प्रतिपाद्यते—

यस्योदये सति विवक्षितभवाद् भवान्तरे जीवानां गमनं स्यात् तद्रूपत्वं गतिनामकर्मणो लक्षणम् ।

यस्योदये सति नरकगमनरूपत्वं तन्नरकगतिनामकर्मणो लक्षणम् ।

यस्योदये सति तिर्यग्गतिगमनरूपत्वं तत्तिर्यग्गतिनामकर्मणो लक्षणम् ।

यस्योदये सति मनुष्यगतिगमनरूपत्वं तन्मनुष्यगतिनामकर्मणो लक्षणम् ।

यस्योदये सति देवगतिगमनरूपत्वं तद्देवगतिनामकर्मणो लक्षणम् ।

यस्योदये सति एकेन्द्रियादिजातिव्यवहारभाक् स्यात् तद्रूपत्वम्, एकेन्द्रियादिसंज्ञाव्यपदेशनिमित्तकत्वम्, नारकादिगतिषु अव्यभिचारिसादृश्यैनैकीभूतार्थात्मिका या जातिस्तद्व्यपदेशभाग्निमित्तकत्वं वा एकेन्द्रियादिजातिनामकर्मणो लक्षणम् ।

यस्योदये सति चेतनस्य निवासस्थानरूपशरीरनिष्पत्तिः स्यात् तद्रूपत्वं शरीरनामकर्मणो लक्षणम् ।

सारस्थूलपुद्गलद्रव्यवर्गणानिर्मापितरूपत्वमौदारिकशरीरस्य लक्षणम् ।

तत्प्रायोग्यपुद्गलग्रहणनिमित्तकत्वं तन्नामकर्मणो लक्षणम् ।

विचित्रशक्तियुक्तवैक्रियवर्गणाद्रव्यनिर्मापितरूपत्वं वैक्रियशरीरस्य लक्षणम्।

तत्प्रायोग्यपुद्गलादाननिमित्तकत्वं तन्नामकर्मणो लक्षणम्।

सूक्ष्मार्थसंशयच्छेदजिनेन्द्रर्द्धिविलोकनादिप्रयोजनसाधनायातिस्वच्छाहारकवर्गणाद्रव्यैर्निर्मापितरूपत्वमाहारकशरीरस्य लक्षणम्।

तत्प्रायोग्यवर्गणादाननिमित्तकत्वं तन्नामकर्मणो लक्षणम्।

तेजोलेश्यादिसाधनत्वे सति भुक्ताहारपरिपाकसमर्थरूपत्वं तैजसशरीरस्य लक्षणम्। तत्प्रायोग्यपुद्गलादाननिमित्तकत्वं तन्नामकर्मणो लक्षणम्।

बदराणां कुण्डमिवाऽङ्कुरादीनां बीजमिवाऽशेषकर्माधारभूतत्वे सति समस्तकर्मप्रसवनसमर्थरूपत्वं कार्मणशरीरस्य लक्षणम्।

तत्प्रायोग्यपुद्गलादाननिमित्तकत्वं तन्नामकर्मणो लक्षणम्।

यस्योदये सति अङ्गोपाङ्गानि निर्वर्त्यन्ते, तद्रूपत्वमङ्गोपाङ्गनामकर्मणो लक्षणम्।

अथ प्रत्येकाङ्गस्योपाङ्गानि कथ्यन्ते, मस्तक-कपाल-कृकाटिका-शङ्ख-ललाट-तालु-कपोल-हनु-चिबुक-दशनौ-

ष्ठ-भ्रू-नयन-कर्ण-नासाद्युपाङ्गानि शिरसः। एवं सर्वेषामङ्गानामुपाङ्गानि ज्ञेयानि, काष्ठानां जतुवद्।

औदारिकादिशरीरप्रायोग्याणां गृहीतगृह्यमाणपुद्गलानां यत् परस्परमेलनलक्षणसंबन्धकरणसमर्थं स्यात् तद्रूपत्वं बन्धननामकर्मणो लक्षणम्।

पूर्वगृहीतैर्यदौदारिकपुद्गलैर्गृह्यमाणौदारिकाङ्गोपाङ्गयोग्यपुद्गलानां परस्परं संबन्धो यन्निमित्तकः तद्रूपत्वमौदारिकौदारिकबन्धनस्य लक्षणम्, एवमन्येषामपि ज्ञातव्यम्।

औदारिकाद्यङ्गयोग्यपुद्गलानां यन्निमित्तकसंघातो भवति तद्रूपत्वं वा, औदारिकादिशरीराणां विवररहिताऽन्योन्यप्रदेशानुप्रवेशनैकत्वापादनं यन्निमित्तकं तद्रूपत्वं वा, दन्ताली तृणगणमिव यत्कर्म औदारिकादिपुद्गलानां समूहीकरोति तद्रूपत्वं वा संघातननामकर्मणो लक्षणम्।

यस्योदये सति वध्यमानपुद्गलेषु आकारविशेषाविर्भावो भवति तद्रूपत्वम्, यन्निमित्तकौदारिकादिशरीराकारनिर्वृत्तिर्भवति तद्रूपत्वं वा संस्थाननामकर्मणो लक्षणम्।

यन्निमित्तकदृढतमादिभेदभिन्नास्थिबन्धनरूपविशेषो भवति तद्रूपत्वं संहननस्य लक्षणम्।

तच्च वज्रर्षभनाराचादिभेदात् षोढा प्राक् कथितम्।

तत्र संहननं नामाऽस्थ्नां बन्धनविशेषः, शक्तिविशेषो

वा। अत्रर्षभः पट्टो, वज्रं कीलिका, य उभयपार्श्वयोरस्थिबन्धविशेषः स मर्कटबन्धलक्षणो नाराचः, एवं रीत्या भावना कार्या।

यस्योदये सति औदारिकादिशरीरेषु कठिनत्वादिस्पर्शविशेषाविर्भावः स्यात् तद्रूपत्वं स्पर्शनामकर्मणो लक्षणम्।

यस्योदये सति तेष्वेव गन्धरसवर्णविशेषाविर्भावो भवति, तद्रूपत्वं गन्धादिनामकर्मणो लक्षणम्।

स्वकीयोत्पत्तिस्थाने गन्तुकामस्यान्तर्गतौ वर्तमानस्य विजन्मवत आत्मनो यत्कर्मावलम्ब्योत्पत्तिस्थानं यावन्नाप्नोति तावदवस्थाविशेषरूपत्वमानुपूर्वीनामकर्मणो लक्षणम्।

अयं भावः–नारकाद्युत्पत्तिस्थानरूपगतौ उत्पत्तुकामस्यात्मनः कर्मसामर्थ्यादन्तर्गतौ वर्तमानस्य यावदुत्पत्तिस्थानं न प्राप्नोति तावदन्तर्गतिः, तत्र वर्तमानस्य विजन्मवतश्चानुपूर्वीनामकर्मोदयो भवति।

आनुपूर्वी नाम क्षेत्रसन्निवेशक्रमः। अथवा, यस्योदये सति पूर्वशरीराकारस्य विनाशो भवति तद्रूपत्वम्, निर्माणनामकर्मनिष्पादिताङ्गोपाङ्गानां विनिवेशक्रमनियामकरूपत्वमिति वा केषाञ्चिद् मतम्।

भावार्थं उच्यते—पूर्वोक्तनिर्माणनामानिष्पादितावयवानामङ्गानां हस्तपादादीनामुपाङ्गानामङ्गुलीकर्णनासादीनां, विनिवेशो रचनाविशेषः तस्य क्रमः परिपाटी, तस्या नि-

यामकं 'अनेनाङ्गोपाङ्गेनात्रैव विनिवेष्टव्यम्' इत्येवरूपं नियमकारि आनुपूर्वीनामकर्म ।

लब्धिशिक्षर्द्धिनिमित्तकत्वे सति आकाशगमननिमित्तकत्वम्, आकाशविषयकगमननिमित्तकत्वं वा विहायोगतिनामकर्मणो लक्षणम् ।

तच्च द्वेधा, शुभाशुभभेदात् ।

तत्र प्रशस्ता गतिर्हंसगजादीनाम्, अप्रशस्तोष्ट्रशृगालादीनाम् ।

लब्धिर्देवादीनां देवयोन्युत्पन्नाविनाभाविनी, शिक्षया ऋद्धिः शिक्षर्द्धिः, तपस्विनां प्रवचनमधीयानानां विद्याद्यावर्त्तनप्रभावाद् वा। तथा च लब्धिशिक्षर्द्धिजन्यत्वे सति आकाशगमनभूतत्वं विहायोगतिनामकर्मणो लक्षणमिति फलितार्थः ।

परं प्रति त्रासप्रतिघातादिजनकत्वं, दर्शनमात्रेण सभ्यानां क्षोभापादकरूपत्रासजनकत्वे सति परप्रतिभाप्रतिघातजनकत्वं वा पराघातनामकर्मणो लक्षणम् ।

प्राणापानयोग्यपुद्गलादानसामर्थ्यजनकत्वम्, यन्निमित्तकोच्छ्वासनिःश्वासौ भवतस्तद्रूपत्वं वोच्छ्वासनामकर्मणो लक्षणम् ।

लक्षणघटकप्राणापानौ प्रागुक्तावपि विशेषप्रतिपत्त्यर्थमुच्येते—

ऊर्ध्वगामिसमीरणरूपत्वं प्राणस्य लक्षणम् ।

अधोगामिसमीरणरूपत्वमपानस्य लक्षणम्।

प्राणापानौ चानन्तप्रदेशपुद्गलस्कन्धपरिणामजन्यौ।

आतपशक्तिजननसामर्थ्यनिमित्तकत्वमातपनामकर्मणो लक्षणम्। अथवा, यस्योदये सति स्वयं शीतस्वभावा अपि परान् तापयन्ति तद्रूपत्वम्। तच्च सूर्यमण्डलवर्तिबादरपृथिवीकायेषु एव विपच्यते, नान्यत्र।

अनुष्णप्रकाशसामर्थ्यजनकत्वमुद्द्योतस्य लक्षणम्। तच्च खद्योतादिषु ज्ञेयं, न सूर्यमण्डलाग्न्यादौ।

अगुरुलघुपरिणामनियामकत्वमगुरुलघुनामकर्मणो लक्षणम्।

भावार्थ उच्यते—यस्य कर्मण उदयात् कुन्थ्वादीनां सर्वजीवानामात्मीयशरीराणि न गुरूणि, नापि लघूनि च; किन्तु अगुरुलघुपरिणाममेवाऽवरुन्धन्ति तत्कर्माऽगुरुलघुशब्देनोच्यते। निश्चयनयापेक्षया सर्वद्रव्याणि स्थित्यादिस्वभावेन परिणमन्त इति जैनसिद्धान्तः।

तत्र अगुरुलघ्वाख्यो यः परिणामस्तस्य नियामकं तदेव तत्रोद्भूततरशक्तिकं निधत्त इत्यगुरुलघु नाम। सर्वशरीराणि च निश्चयनयाश्रयाद् न गुरुलघ्वादिव्यपदेशभाञ्जि। व्यवहारनयाश्रये तु अन्योन्यापेक्षया त्रैविध्यमनुरुध्यन्ते।

यस्योदये सति त्रिभुवनस्यापि पूज्यो भवति तद्रूपत्वं तीर्थकृन्नामकर्मणो लक्षणम्। तच्च कैवल्यावस्थायां विपच्यते।

सर्वजीवानामात्मीयशरीरावयवानां विन्यासनियमनिमित्तकत्वं निर्माणनामकर्मणो लक्षणम्, प्रासादादिनिर्माणकलाकौशलोपेतवर्धकीवत्।

शरीराङ्गोपाङ्गानां यस्योदये सति अनेकधोपघातः क्रियते तद्रूपत्वं, स्वशरीरावयवलम्बिकादिभिः स्वावयवानां विघातो यन्निमित्तको भवति तद्रूपत्वम्, स्वकीयपराक्रमाद्युपघातजनकत्वम्, यस्योदये सति स्वपरकृतोद्बन्धनाद्युपघातो भवति तद्रूपत्वं वोपघातनामकर्मणो लक्षणम्।

द्वीन्द्रियादित्रसभावनिर्वर्तकत्वम्, यस्योदये सति द्वीन्द्रियादिषूत्पत्तिर्भवति तद्रूपत्वं वा त्रसनामकर्मणो लक्षणम्।

यस्योदये सति जीवानां स्थूलत्वलक्षणवादरत्वं स्यात् तद्रूपत्वं, स्थूलस्वरूपवादरशरीरनिर्वर्तकत्वं वा वादरनामकर्मणो लक्षणम्।

यन्निमित्तकाहारादिवर्गणाद्रव्याणामादानपरिणामयोः शक्तिरुत्पन्ना तद्रूपत्वं पर्याप्तनामकर्मणो लक्षणम्।

सा च षोढा, आहार-शरीरे-न्द्रिय-श्वासोच्छ्वास-भाषा-मनःपर्याप्तिभेदात्।

शरीरेन्द्रियवाङ्मनःप्राणापानयोग्यवर्गणादलिकद्रव्याहरणक्रियापरिसमाप्तिरूपत्वमाहारपर्याप्तेर्लक्षणम्।

निजोचितगृहीताहारवर्गणाद्रव्याणां पृथक् खलरसरूपेण परिणतिर्यन्निमित्ता भवति तद्रूपत्वम्, रसीभूताहारस्य शरीरयोग्या परिणतिर्यन्निमित्ता भवति तद्रूपत्वम्,

रसीभूताहारस्य शरीरतया विन्यासक्रियापरिसमाप्तिरूपत्वं वा शरीरपर्याप्तेर्लक्षणम्।

धातुतया परिणतमाहारमिन्द्रियतया परिणतं या शक्तिर्जनयति तद्रूपत्वं, त्वगादीन्द्रियनिर्वर्तनक्रियापरिसमाप्तिरूपत्वं वा इन्द्रियपर्याप्तेर्लक्षणम्।

प्राणापानक्रियायोग्यपुद्गलद्रव्यग्रहणनिसर्गशक्तिनिर्वर्तनक्रियापरिसमाप्तिरूपत्वं प्राणापानपर्याप्तेर्लक्षणम्।

अत्र च प्राणापानशब्देनोच्छ्वासनिःश्वासौ कथ्येते।

भाषायोग्यपुद्गलद्रव्यग्रहणनिसर्गशक्तिनिर्वर्तनक्रियापरिसमाप्तिरूपत्वं भाषापर्याप्तेर्लक्षणम्।

मनोयोग्यद्रव्यग्रहणनिसर्गशक्तिनिर्वर्तनक्रियापरिसमाप्तिरूपत्वं मनःपर्याप्तेर्लक्षणम्।

यस्योदये सति पृथक् शरीरं भवति तद्रूपत्वं, यन्निमित्तकं पृथक् शरीरं भवति तद्रूपत्वं वा प्रत्येकनामकर्मणो लक्षणम्।

दन्तादीनां स्थिरतासंपादकत्वं स्थिरनामकर्मणो लक्षणम्।

शुभभावशोभामाङ्गल्यादिनिर्वर्तकत्वं, शरीरादीनां रमणीयताजनकत्वं वा शुभनामकर्मणो लक्षणम्। अयं भावः—शुभो भावः पूजितोत्तमाङ्गादिरूपः, तज्जनिता या शोभा सत्कारादरनमस्कारादिलक्षणा, सा शोभापदवाच्या। माङ्गल्यं पावित्र्यं, तन्निर्वर्तकं शुभनामकर्म।

सौभाग्यजनकत्वं सुभगनामकर्मणो लक्षणम् ।

सुस्वरतासंपादकत्वं सुस्वरनामकर्मणो लक्षणम् ।

यस्योदये सति यस्य वचनं प्रमाणीक्रियते, दर्श-नानन्तरं च जना अभ्युत्थानादिकं कुर्वन्ति तद्रूपत्वं, यस्योदये सति सर्वग्राह्यवचनो यः भवति तद्रूपत्वं वा आदेयनामकर्मणो लक्षणम् ।

यस्योदये सति प्रख्यातिगुणोत्कीर्तनप्रशंसादिकं भव-ति तद्रूपत्वं यशःकीर्त्तिनामकर्मणो लक्षणम् ।

॥ इति त्रसदशकम् ॥

अथ स्थावरदशकं निगद्यते । स्थावरभावनिर्वर्तकत्वं, यस्योदये सति स्थानशीलस्थावरेषूत्पत्तिर्भवति तद्रूपत्वं वा स्थावरनामकर्मणो लक्षणम् ।

अदृश्यरूपसूक्ष्मशरीरनिर्वर्तकत्वं सूक्ष्मनामकर्मणो लक्षणम् ।

दन्ताऽस्थ्यादीनामस्थिरतासंपादकत्वमस्थिरनामक-र्मणो लक्षणम् ।

अपर्याप्तिनामकर्मोदयवर्तित्वमपर्याप्तिनामकर्मणो लक्षणम् ।

अनन्तजीवसाधारणैकशरीरनिर्वर्तनानिमित्तकत्वं सा-धारणनामकर्मणो लक्षणम् ।

पूर्वोक्तशुभलक्षणाद् विपरीतरूपत्वं अशुभनामकर्मणो लक्षणम् ।

दौर्भाग्यादिनिर्वर्तकत्वं दुर्भगनामकर्मणो लक्षणम्।

दुस्वरतासंपादकत्वं दुस्वरनामकर्मणो लक्षणम्।

यस्योदये सति युक्तियुक्तमपि वचनं जनग्राह्यं न भवति तद्रूपत्वमनादेयनामकर्मणो लक्षणम्।

पूर्वोक्तयशःकीर्तिनामलक्षणाविपरीतरूपत्वमयशःकीर्ति-नामकर्मणो लक्षणम्।

उक्तं नामकर्म लक्षणविधानाभ्याम्। अधुना गोत्रा-न्तरायौ कथ्येते—

*आर्यदेश-सुजाति-कुल-स्थान-सत्कारैश्वर्याद्युत्कर्षसं-पादकत्वमुच्चैर्गोत्रकर्मणो लक्षणम्।

चाण्डालमुष्टिकव्याधमत्स्यबन्धदास्यादिभावसंपाद-कत्वं नीचैर्गोत्रस्य लक्षणम्।

यस्योदये सति प्रतिग्राहके संनिहितेऽपि 'अस्मै दत्तं महाफलम्' इति जानताऽपि दातव्यद्रव्यं न दीयते तद्रूपत्वं दानान्तरायस्य लक्षणम्।

यस्योदये सति अन्नपानमाल्यादिवस्तुसन्निधानेऽपि भोक्तुं न शक्यते तद्रूपत्वं भोगान्तरायस्य लक्षणम्।

यस्योदये सति स्त्रीवस्त्रशयनासनादिवस्तुसान्निधा-नेऽपि त्यागाऽभावे च सति उपभोक्तुं न शक्यते तद्रूपत्व-मुपभोगान्तरायस्य लक्षणम्।

यस्योदये सति उत्साहप्रतिघातो भवति तद्रूपत्वं वीर्या-न्तरायस्य लक्षणम्।

कथितो मूलप्रकृतिबन्धः। अधुना स्थितिबन्धो निरूप्यते।

स्थितिरवस्थानं बन्धकादारभ्य यावदशेषं निर्जीयते तावत्पर्यन्ता। लक्षणं तु प्रागुक्तमेव।

अधुना प्रत्येककर्मप्रकृतीनां स्थितिः प्रतिपाद्यते—

ज्ञान-दर्शनावरण-वेदनीया-ऽन्तरायलक्षणप्रकृतीनां त्रिंशत्सागरोपमकोटाकोटिलक्षणा परा स्थितिः।

नामगोत्रप्रकृतीनां विंशतिसागरोपमकोटाकोटिलक्षणा परा स्थितिः।

आयुषस्त्रयस्त्रिंशत्सागरोपमलक्षणा परा स्थितिः।

जघन्या वेदनीयस्य द्वादशमुहूर्ता। अन्तर्मुहूर्ताऽपि मतान्तरे।

शेषाणां ज्ञान-दर्शनावरण-मोहनीया-ऽऽयुष्का-ऽन्तरा-याणामन्तर्मुहूर्ता जघन्या स्थितिः।

उक्तः स्थितिबन्धः। अधुनाऽनुभागबन्धः प्रतिपाद्यते-

अनुभागो नाम विपाकः, विविधं पचनं विपाकः, उदयावलिकायां कर्मदलिकानां प्रवेशः, अथवा कर्मणां विशिष्टो नानाप्रकारो वा पाको विपाकः।

अप्रशस्तपरिणामानां तीव्रता, शुभपरिणामानां मन्दता। यथोक्तकर्मविशेषाऽनुभवनं सर्वासां कर्मप्रकृतीनां फलम्। विपाकोदयानुभवनं बन्धादारभ्याबाधाकालं मुक्त्वा जीवस्यानुसमयं कर्मानुभवनम्।

तद्यथा—ज्ञानावरणस्य फलं ज्ञानावरोधः। दर्शनावरणस्य दर्शनशक्त्यवरोध इत्यादि।

यथा येनाऽध्यवसायविशेषेण यादृशरूपं बद्धं कर्म तत्तथा तेनैव प्रकारेण विपच्यते, अन्यप्रकारेणाऽपि।

विपाको रसः, स च तीव्रमन्दमध्यमाद्यवस्थाभेदभिन्नः।

तत्र कदाचिच्छुभमपि अशुभतयाऽनुभूयते, अशुभं च शुभरसतयेति। स चानुभावसंज्ञो रसस्तीव्रादिभेद्भिन्नोऽनेकप्रकारकः कर्माणि भवति। तत्र च किञ्चित् कर्म पुद्गलेषु विपच्यते, पुद्गलान् परिणमयति नानाप्रकारेणेत्यर्थः, तत्पुद्गलविपाकीत्युच्यते।

किञ्चित् कर्म भवविपाकि भवति, प्राप्तजन्मनः शरीरवदात्मनि विपच्यते, अपरं तु क्षेत्रविपाकि क्षेत्रान्तरे विपच्यते, अन्यत् किञ्चिज्जीवविपाकि जीव एव विपच्यते।

ज्ञानावरणादीनां सप्रभेदानां प्रत्येकमन्वर्थनिर्देशः कृतः।

यदि विपाकोऽनुभाव इति कथ्यते तर्हि तत् कर्मानुभूतं सत् किमावरणवदवतिष्ठते उत निःसारं सत् प्रच्यवते? इति शङ्कायां समाधीयते। तस्माद् विपाकलक्षणानुभवात् कर्मणो निर्जरणं भवति, आत्मप्रदेशेभ्यः प्रतिपतनं भवतीत्यर्थः। निर्जरा क्षयो वेदनेति पर्यायाः। तत्र निर्जरा हानिः, क्षयो विनाशः, कर्मपरिणतेर्विगमो वेदना, रसानुभव आकर्मफलोपभोगपरिसमाप्तेः।

सा च निर्जरा द्वेधा, विपाकजेतरभेदात्। तत्र विपाकजा संसारसमुद्रे परिभ्राम्यमाणस्यात्मनः शुभाशुभकर्मणो विपाककालप्राप्तस्य यथायथमुदयावलिकास्रोतसि पतितस्य फलोपभोगादुपजातस्थितिक्षये सति या निवृत्तिः सा विपाकजा निर्जरा भवति।

यत्कर्माऽप्राप्तविपाककालमौपक्रमिकक्रियाविशेषसामर्थ्यादनुदीर्णमपि बलादुदीर्योदयावलिकायामनुप्रविश्यते, पनसतिन्दुकाम्रफलपाकवत्, सा तु अविपाकजा निर्जरा भवति। तां तु 'तपसो निर्जरा भवति' इति व्याख्यानाऽवसरे प्रतिपादयिष्यामि।

उक्तोऽनुभागबन्धः। अथ प्रदेशबन्धो निगद्यते।

नामप्रत्ययाः सर्वतो योगविशेषात् सूक्ष्मैकक्षेत्राऽवगाढस्थिताः सर्वात्मप्रदेशेषु अनन्ताऽनन्तप्रदेशाः। व्याख्यास्य नामप्रत्ययाः पुद्गला ज्ञानावरणादिविघ्नपर्यवसानं नाम तस्य प्रत्ययाः कारणानि मिथ्यादर्शनादीनि सर्वतः तिर्यगूर्ध्वमधश्च बध्यन्ते। कायवाङ्मनोलक्षणयोगविशेषाच्च सूक्ष्माश्च बध्यन्ते, न तु बादराः। अत्र च सूक्ष्मत्वमापेक्षिकम्। तथाहि-परमाणोरारभ्य यावदनन्तप्रदेशाः स्कन्धास्तावदपि अतिसूक्ष्मत्वान्न बन्धयोग्या भवन्ति। अनन्तप्रदेशवर्गणायामपि केचिद् ग्रहणयोग्याः, केचिच्च न, अतः सूक्ष्मग्रहणम्। एवं क्रमेणौदारिक-वैक्रिय-आहारक-तैजस-भाषा-प्राणापानमनोवर्गणां समुल्लङ्घ्य कर्मवर्ग-

णायोग्याः सूक्ष्मपरिणतिरूपा एव बध्यन्ते, न बादरपरिणतिभाजः। एवं क्रमेणाऽपि सूक्ष्मपरिणतिभाजः केचिद्ग्रहणयोग्याः, केचिच्च न।

यत्रावकाशे जीवावगाढस्तत्रैव ये कर्मयोग्याः पुद्गलास्त एव बध्यन्ते न क्षेत्रान्तरावगाढाः। तत्र वर्तमानास्ते च स्नेहगुणयोगादात्मनि लगन्ति, न क्षेत्रान्तरावगाढाः, तद्भावपरिणामाऽभावात्। तेऽपि पुद्गलाः स्थिता एव बध्यन्ते, न गतिसमापन्नाः। गतिं प्राप्तास्तु गच्छन्त्येव, परिणामविशेषाद् नात्मनि श्लिष्यन्ते, वेगवत्त्वात्। सर्वप्रकृतिपुद्गलाः सर्वात्मप्रदेशेषु बध्यन्ते।

एकैको ह्यात्मप्रदेशोऽनन्तानन्तकर्मप्रदेशैः बद्धोऽसंख्यप्रदेशात्मकजीवस्यैकैकप्रदेशोऽनन्तानन्तज्ञानावरणकर्मस्कन्धैर्बद्धः।

एवं दर्शनावरणादिकर्मस्कन्धैरपि अनन्ताऽनन्तप्रदेशाः कर्मग्रहणयोग्याः पुद्गला बध्यन्ते।

अयं फलितार्थः—आत्मन एकैकप्रदेशे ज्ञानावरणादिपुद्गला अनन्ताऽनन्तप्रदेशाः स्कन्धाः कर्मवर्गणायोग्या बध्यन्ते–श्लेषमुपयान्ति. अयोग्यास्तु न बध्यन्ते।

प्रदेशबन्ध उक्तः।

अथ प्रसङ्गात् पुण्यप्रकृतिरपि प्रतिपाद्यते—

सद्वेद्यसम्यक्त्वहास्यरतिपुरुषवेदशुभायुर्नामगोत्रलक्षणाः पुण्यप्रकृतयः। तत्र सद्वेद्यं भूतव्रत्यनुकम्पादिहेतुकम्।

तथाहि-भूतव्रत्यनुकम्पादानं सरागसंयमादियोगः क्षान्तिः शौचमिति सद्वेद्यस्य कारणानि ।

सम्यक्त्वं तत्त्वार्थश्रद्धानलक्षणम् । तदपि केवलिश्रुतसङ्घदेवानामवर्णवादनिषेधपूर्वकवर्णवादादिहेतुकम् ।

वर्णवादस्तु सद्भूतगुणोद्भावनं पूजापर्युपासनं, त एव हेतवो यस्य तद्धेतुकम् ।

हास्यवेदनीयं हास्याकारेणानुभवनीयम् ।

रतिवेदनीयं रत्याकारेणानुभवनीयम् ।

पुरुषवेदनीयं पुरुषवेदरूपेणानुभवनीयम् ।

शुभायुर्मानुषदेवायुर्लक्षणमिति भाष्यकाराभिप्रायः । कर्मप्रकृतिग्रन्थानुसारिणस्तु तिर्यगायुरपि शुभमाचक्षते ।

शुभगोत्रमुच्चैर्गोत्रं शुभनाम गतिजातिनामादीनां मध्यादुद्वर्तितव्यम् ।

सद्वेद्यादिकमष्टविधं पुण्यसंज्ञितं कथितम् । तथा चार्थलभ्यं पापं व्युदसनीयम् ।

यद्यपि कथिता पुण्यप्रकृतिः, तथापि प्रकारान्तरेण स्पष्टतया द्वाचत्वारिंशदुच्यन्ते—

सद्वेद्यं तिर्यग्मनुष्यदेवायूंषि मनुष्यदेवगती पञ्चेन्द्रियजातिः शरीराणि पञ्च समचतुरस्रसंस्थानं वज्रर्षभनाराचसंहननमङ्गोपाङ्गत्रयं प्रशस्तवर्णगन्धरसस्पर्शा मनुष्यदेवानुपूर्व्यौ अगुरुलघूपघाते उच्छ्वास-आतपोद्द्योत-प्रशस्त-

विहायोगतित्रसबादरपर्याप्तिप्रत्येकस्थिरशुभसुभगसुस्वरादेययशःकीर्तिपर्यवसानाः शुभा निर्माणतीर्थंकरोच्चैर्गोत्रैः सहेति पूर्वप्रकृतिविपरीतभूताः पापप्रकृतय इति कथितो बन्धाधिकारः।

इति ए-एम्-ए-इस्-वीत्युपाधियुक्त-शास्त्रविशारद–जैनाचार्य–श्रीमद्विजयधर्मसूरीश्वरचरणारविन्दभृङ्गायमाणेन न्यायतीर्थ-न्यायविशारदोपाधियुक्तेन प्रवर्त्तकमङ्गलविजयेन विरचिते जैनतत्त्वप्रदीपाख्ये ग्रन्थे बन्धतत्त्ववर्णननामा चतुर्थोऽधिकारः समाप्तिं यातः॥



# पञ्चमोऽधिकारः ।

अथापूर्वपुद्गलादानोच्छेदनिमित्तभूतसंवरतत्त्वं लक्षणविधानाभ्यां प्रतिपाद्यते—

आश्रवनिरोधनिमित्तकत्वं संवरस्य लक्षणम् ।

स द्वेधा, द्रव्यभावभेदात् ।

कर्मपुद्गलादानोच्छेदपरिमाणरूपत्वं द्रव्यसंवरस्य लक्षणम् ।

भवहेतुक्रियात्यागलक्षणपरिणामरूपत्वं भावसंवरस्य लक्षणम् ।

तत्राश्रवः कर्मप्रदेशविचयाः शुभाशुभलक्षणाः कायादयस्त्रय इन्द्रियकषायाव्रतक्रियाः पञ्चचतुष्पञ्चपञ्चविंशतिसंख्याकाः, तेषां निरोधो निवारणं संवरः स्मृतः ।

कर्मोपादनहेतुभूतपरिणामाभावरूपत्वमिति फलितलक्षणं संवरस्य ।

स च पुनर्द्वेधा, सर्वदेशभेदात् ।

तत्र सूक्ष्मबादरयोगनिरोधकाले सर्वसंवरः, शेषकाले चारित्रप्रतिपत्तेरारभ्य देशसंवरपरिणतिभागात्मा भवति ।

अयं भावः–सामायिकादिचारित्रवतां परिस्पन्दवत्त्वेसत्यपि विदिततत्त्वानां संसारसमुद्रं तरीतुमभिवाञ्छतां प्रधानसंवराभावेऽपि न्यस्तसमस्तप्रमादस्थानानां देशसंवरः खलु समस्त्येवेति प्रतिपादनाय प्रोच्यते—

स च संवरो गुप्ति-समिति-धर्मा-नुप्रेक्षा-परिषह-जय-चारित्रलक्षणोपायैर्भवतीति तेषां स्वरूपं प्रतिपाद्यते—

रागद्वेषपरिणतिजन्यार्त्तरौद्रध्यानाध्यवसायाद् मनोनिवृत्त्यपरित्यक्तैहिकामुष्मिकविषयाभिलाषस्य मनोगुप्तत्वादेव कर्म निरुध्यते।

सम्यग्दर्शनज्ञानपूर्वकात्रिविधयोगस्य शास्त्रोक्तविधिना स्वाधीनमार्गव्यवस्थापनरूपत्वं गुप्तिसामान्यस्य लक्षणम्।

सा च त्रेधा, मनोवाक्कायगुप्तिभेदात्।

समस्तकल्पनाजालपरित्यागपूर्वकत्वे सति समत्वे *सुप्रतिष्ठितस्य मनसः यदात्मरमणतारूपत्वं, कुशलाकुशलसंकल्पनिरोधरूपत्वं वा मनोगुप्तेर्लक्षणम्।

वाचनप्रच्छनप्रश्नव्याकरणादिष्वपि सर्वथा वाग्निरोधरूपत्वं, सर्वथा भाषानिरोधरूपत्वं वा वाग्गुप्तेर्लक्षणम्।

शयनासननिक्षेपस्थानचङ्क्रमणादिषु कायचेष्टानियमरूपत्वं कायगुप्तेर्लक्षणम्।

---

*तत्र कुशलसंकल्पाऽनुष्ठानं सरागसंयमादिलक्षणं, अकुशलं तद्विपरीतरूपम्, कुशले सरागसंयमादौ प्रवृत्तेः सद्भावेऽपि अकुशले संसारहेतावभावादेव मनोगुप्तिः। योगनिरोधावस्थायां तु सर्वथाभावादेव मनोगुप्तिः, तत्काले सर्वकर्मक्षयार्थ एवात्मनः परिणामो भवति।

इति प्रतिपादिता गुप्तिः। अथ समितिस्वरूपं प्रतिपाद्यते—

सम्यक्प्रवृत्तिरूपत्वं समितेर्लक्षणम्।

सा च पञ्चधा, भाषैषणादाननिक्षेपोत्सर्गसमितिभेदात्।

संयमार्थमवश्यतया सूर्यालोके सति सर्वतो युगमात्रनिरीक्षणायुक्तस्य जीवरक्षार्थं शनैश्चरणयोर्न्यासरूपत्वमीर्यासमितेर्लक्षणम्।

हितमितासंदिग्धानवद्यार्थविषयकानियमितभाषणरूपत्वम्, निरवद्यार्थभाषणत्वे सति सत्यासत्यामृषालक्षणयोर्भाषयोर्द्वयोः सूत्रानुसारिणोर्भाषणरूपत्वं वा भाषासमितेर्लक्षणम्।

अन्नपानरजोहरणपात्रचीवरादिधर्मसाधनानां प्रतिश्रयस्य चोद्गमोत्पादनैषणादोषवर्जनपूर्वकगवेषणरूपत्वमेषणासमितेर्लक्षणम्।

रजोहरणपात्रचीवरपीठफलकदण्डकादीनां निरीक्षणप्रमार्जनपूर्वकग्रहणनिक्षेपकरणरूपत्वम्, रजोहरणादिधर्मोपकरणानामवश्यतया निरीक्ष्य प्रमृज्य च ग्रहणनिक्षेपकरणरूपत्वं वा आदाननिक्षेपणासमितेर्लक्षणम्।

जन्तुवर्जितभूमौ निरीक्ष्य प्रमृज्य च मूत्रपुरीषादीनां परित्यागकरणरूपत्वमुत्सर्गसमितेर्लक्षणम्।

कथिता समितिर्लक्षणविधानाभ्याम्। संप्रति धर्मः प्रतिपाद्यते—

दुर्गतिपततां जन्तूनां धारकत्वे सति शुभस्थाने स्थापनरूपत्वं धर्मस्य लक्षणम्।

स च दशधा, क्षमा-मार्दवा-ऽऽर्जव-शौच-सत्य-संयम-तप-स्त्यागा-ऽकिञ्चन्य-ब्रह्मचर्यलक्षणधर्मभेदात्।

एष दशविधोऽनगारधर्म उत्तमगुणप्रकर्षयुक्तो भवति।

अथ प्रत्येकस्य लक्षणं प्रतिपाद्यते—

क्रोधोदयनिमित्तनिरोधकर्त्वे सति उदितक्रोधस्य च विवेकबलेन निष्फलताऽऽपादनरूपत्वं, *क्रोधनिग्रहरूपत्वं वा क्षमाया लक्षणम्।

यथायोग्यमभ्युत्थानासनदानाञ्जलिप्रग्रहादिलक्षणविनयकरणरूपत्वे सति अहङ्काराभावरूपत्वं, मदानिग्रहरूपत्वं, मानोदयनिमित्तनिरोधकत्वे सति उदितस्य विफलतापादनरूपत्वं वा मार्दवस्य लक्षणम्।

भावदोषरहितत्वे सति हिंसनरूपपरिणामाभावापादनरूपत्वम् योगस्यावक्रतापादनपूर्वकाविसंवादरूपत्वम्,

---

* परैः प्रयुक्तस्य क्रोधनिमित्तस्यात्मनि भावाभावचिन्तनेन निग्रहीतव्यं भावनिमित्तं तावद् मयि एते दोषा विद्यन्ते, किमत्रासौ मिथ्या ब्रवीतीति चिन्तनेन निग्रहीतव्यमभावनिमित्तं तावन्नैते दोषा मयि विद्यन्तेऽज्ञानादेवासौ ब्रवीतीति चिन्तनेन निग्रहीतव्यमित्येवं प्रकारेण क्रोधनिग्रहः करणीयः।

मायोदयनिमित्तनिरोधकत्वे उदितस्य विफलतापादन-रूपत्वं वाऽऽर्जवस्य लक्षणम् ।

शौचलक्षणं पूर्वोक्तमपि पुनरुच्यते विशेषज्ञानार्थम्, धर्मोपकरणरजोहरणमुखवस्त्रिकाचोलपट्टकदण्डपात्रादिष्वपि गतमूर्च्छत्वं, लोभोदयनिमित्तनिरोधकत्वे सति उदितस्य वैफल्यापादनरूपत्वं वा शौचस्य लक्षणम् ।

मोक्षमार्गाराधनीयभाषारूपत्वं सत्यभाषालक्षणधर्मस्य लक्षणम् । अयमत्र भावः—सूत्रमागमानुसारिप्रवृत्तार्थरूपमर्थिजनभावग्रहणसमर्थं परार्थानुग्राहकं निःशङ्कं देशकालोपेतमनवद्यमर्हच्छासनप्रशस्तं याचनप्रच्छनप्रश्नव्याकरणादिरूपं वचनं सत्यम् ।

योगनिग्रहरूपत्वं, ईर्यासमित्यादिषु प्रवर्त्तमानस्यैकेन्द्रियादिप्राणिपीडापरिहाररूपत्वं वा संयमस्य लक्षणम् ।

स च सप्तदशविधः—पञ्चस्थावरसंयमः, चतुर्विधत्रससंयमः, अपेक्ष्यसंयमः, अपहृत्यसंयमः, प्रेक्ष्यसंयमः, प्रमृज्यसंयमः, कायसंयमः, वाक्संयमः, मनःसंयमः, उपकरणसंयमः । इन्द्रियसंयमः ।

उक्तः संयमः । अथ तपः प्रवक्ष्ये ।

भावदोषत्यागरूपत्वं, सत्यपि वस्तुसन्निधाने सम्यग्ज्ञानपूर्वकपरित्यागकरणत्वं वा त्यागस्य लक्षणम् ।

बाह्याभ्यन्तरद्रव्येषु ममत्वाभावरूपत्वं वा धर्मोपक-

रणादिष्वपि मूर्च्छाराहित्यं वा इष्टानिष्टशब्दादिविषयेषु मूर्च्छाभावरूपत्वमाकिञ्चन्यस्य लक्षणम्।

व्रतपरिपालनज्ञानाभिवृद्धिकषायपरिपाकार्थं गुरुकुलवासरूपत्वं, नवकोटिपरिशुद्धिपूर्वकदिव्यौदारिककामानां परित्यागरूपत्वं वा ब्रह्मचर्यस्य लक्षणम्।

उक्तो धर्मः। अथ भावनास्वरूपं निगद्यते—

सम्यग्ज्ञानपूर्वकपदार्थपरिचिन्तनरूपत्वं भावनाया लक्षणम्।

सा च द्वादशधा, अनित्या-ऽशरण-संसारै-कत्वा-ऽन्यत्वा-ऽशुचित्वा-ऽऽश्रव-संवर-निर्जरा-लोक-बोधिदूर्लभ-धर्मभावनाभेदात्।

बाह्याभ्यन्तरद्रव्याणां सर्वसंयोगानां च विशरारुतानुचिन्तनरूपत्वं वा, बाह्याभ्यन्तरद्रव्यवियोगे सति जातं शारीरिकमानसिकदुःखं तन्मा भूदित्यनागतमेव चिन्तनरूपत्वं वा, सर्वसंयोगेषु विनश्वरभावाऽनुचिन्तनरूपत्वं वाऽनित्यभावनाया लक्षणम्।

वने सिंहाङ्कस्थितमृगशिशुवत् स्वजनादिभ्योऽपि त्राणाऽभावानुचिन्तनरूपत्वं वा, क्षुधितसिंहपराभूतमृगशिशुवज्जन्मजरामरणव्याधिग्रस्ते जीवे स्वजनादिभ्योऽपि परित्राणाऽभावाऽनुचिन्तनरूपत्वं वा, जन्म-जरा-मरण-व्याधि-प्रियवियोगा-ऽप्रियसंयोगे-प्सिताऽलाभ-दारिद्र्य-दौर्भाग्य-दौर्मनस्यादिजन्यदुःखेनाऽभ्याहतस्य जीवस्य संसार-

समुद्रे परित्रायको नास्तीतिचिन्तानुरूपत्वं वाऽशरणभावनाया लक्षणम् ।

रागद्वेषाऽनुभावस्वरूपसंसारे चक्रवज्जन्मजरामरणादिरूपेण भ्रमणानुचिन्तनरूपत्वं, रागद्वेषमोहाभिभूतैर्जन्तुभिरन्योन्याभिघातवधबन्धाक्रोशजनितानि दुःखानि प्राप्यन्ते, अहो ! कष्टरूपः खलु संसारः, इति चिन्तनारूपत्वं वा संसारभावनाया लक्षणम् ।

एवं चिन्तयतः संसारभयं भवति, तस्मान्निर्वेदः, निर्विण्णश्च संसारपरिहाणाय घटते ।

एकाकिपरिभोक्तृत्वरूपेण जन्मजरामरणादिक्लेशाऽनुचिन्तनरूपत्वम्, एक एवाहं न मे कश्चित् स्वकीयः परकीयो वा विद्यते, एक एव जाये, म्रिये वेति चिन्तनारूपत्वं वा एकत्वभावनाया लक्षणम् ।

शरीरादिभ्योऽपि आत्मनो भेदानुचिन्तनरूपत्वम्, अन्योऽहम्, अन्यच्छरीरमिति शरीरात्मनोर्भेदानुचिन्तनरूपत्वं वा अन्यत्वभावनाया लक्षणम् ।

आद्युत्तरकारणाऽशुचित्वा-ऽशुचिभाजनत्वा-ऽशुचिपरिणामपाकाऽनुबन्धस्वरूपाऽशुचित्वादिरूपं खलु शरीरमिति चिन्तनाऽनुरूपत्वमशुचिभावनाया लक्षणम् ।

अयं भावः- शरीरस्याद्यं कारणं शुक्रशोणितरूपं, तच्चाऽत्यन्ताशुचिरूपं भवति । तथा कवलाहारादिग्रस्तमात्र

एव श्लेष्मप्रायो भवति, श्लेष्मणा द्रवीकृतोऽत्यन्ताऽशुचिर्भवति, ततः पित्ताशयं प्राप्य पच्यमानोऽम्लीभूतो भवति, ततो वायुना विभक्तः पृथग् रसरूपः खलीभूतस्याऽशुचिरूपो भवतीत्यादिरीत्योत्तरकारणस्याऽशुचित्वादशुचिभूतमेव शरीरमिति। शरीरकर्णनासादि खलु अशुचिभाजनम्, कललार्बुदपेशीघनव्यूहसंपूर्णगर्भकौमारयौवनादिजननरूपाऽशुभपरिणामस्य मलादीनामुद्भवरूपपरिणामस्य चाशुचित्वादशुचीभूतमेव शरीरम्। पाकेनानुबन्धाद् दुर्गन्धिस्वभावं दुरन्तं भवति, तस्मादशुचिभूतमेव शरीरम्।

मनोवाक्कायलक्षणयोगाः शुभाशुभकर्म यस्मादाश्रवन्ति स आश्रवः। ततश्च श्रोत्रादीन्द्रियविषयप्रसक्तहरिणादिवद् विनिपातमपि गच्छतीति चिन्तनानुरूपत्वम्, कायिकादियोगादिभ्यः शुभाशुभकर्मागमनानुचिन्तनरूपत्वं वा आश्रवभावनाया लक्षणम्।

महाव्रतपरिपालनसाहाय्यीभूतगुप्त्यादीनां मूलोत्तरगुणवच्चिन्तनानुरूपत्वं, यद्यदुपायकर्तृको यो य आश्रवनिरोधस्तत्तदुपायाऽनुचिन्तनरूपत्वं वा संवरभावनाया लक्षणम्।

तादृशोपायश्च प्रतिपाद्यते—

क्षमया क्रोधं, मृदुत्वेन मानं, ऋजुत्वेन मायां, संतोषेण लोभं, अखण्डसंयमेन विषयांश्च रुन्ध्यात्। तिसृभिर्गु-

स्त्रिभिर्योगान् रुन्ध्यात्, अप्रमादेन च प्रमादं निरुन्ध्यात्, सावद्यहानेनाऽविरतिं निरुन्ध्यात्, सम्यग्दर्शनेन मिथ्यात्वं, शुभस्थिरचेतसा आर्तरौद्रे च निरुन्ध्यात् ।

इति संक्षेपत आश्रवनिरोधस्योपायः प्रदर्शितः ।

आत्मप्रदेशानुभूतरसकर्मपुद्गलानां परिशाटनानुकूलचिन्तनरूपत्वं, संसारबीजीभूतानां कर्मणामुपायात् स्वतो वा फलवत्पाकानुचिन्तनरूपत्वं वा निर्जराया लक्षणम् ।

सा च द्वेधा, अबुद्धिपूर्वकुशलमूलभेदात् ।

नरकादिषु कर्मफलविपाकोद्भवरूपा या भवति, सा खलु प्रायोऽनुपयोगपूर्वकत्वादबुद्धिपूर्वा ।

तपःपरीषहादिभ्यो जायमाना च कुशलमूला, सा गुणतोऽनुचिन्तनीया ।

पञ्चास्तिकायात्मकः खलु लोको न केनचिन्निष्पादितो न वा धृतः, किन्तु गगनेऽवस्थित इति चिन्तनानुरूपत्वं वा, पञ्चास्तिकायात्मकः खलु लोको विविधपरिणामयुक्तः स्थित्युत्पत्तिव्ययात्मको विचित्रस्वभाव इति चिन्तनानुरूपत्वं वा लोकभावनाया लक्षणम् ।

अनादिसंसारेऽनन्तशः परिवर्तमानस्य विविधदुःखाभिहतस्य मिथ्यादर्शनादिना प्रहतमतेः सम्यग्दर्शनादिविशुद्धो बोधिर्दुर्लभो भवतीति चिन्तनानुरूपत्वं, पुण्यानुभावेन मनुष्यादिशुभगतिप्राप्तावपि तत्त्वार्थश्रद्धानस्वरूपबोधिरत्नं

दुर्लभं भवतीति चिन्तनानुरूपत्वं वा बोधिदुर्लभभावनाया लक्षणम् ।

सम्यक्त्वद्वारक-महाव्रतसाधक-द्वादशाङ्गोपदिष्टगुप्त्यादि-विशुद्धभूत-संसारसमुद्रतारक-मोक्षप्रापको भगवता कथितः खलु धर्मो भवतीति चिन्तनारूपत्वम्, यस्मिन्नालम्ब्यमाने सति जीवो भवार्णवे न पतति स धर्मो भवतीति चिन्तनानुरूपत्वं वा धर्मभावनाया लक्षणम् ।

॥ उक्ता द्वादश भावनाः ॥

संप्रति निगद्यन्ते परीषहाः ;—

सम्यग्दर्शनादिलक्षणमोक्षमार्गादपरिच्यवनप्रयोजनवत्त्वे सति कर्मनिर्जराप्रयोजनवत्त्वे च सति क्षुधाद्युपद्रवपरीषहणरूपत्वं परीषहस्य लक्षणम् ।

अथ भेदा उच्यन्ते—

ते द्वाविंशतिः, क्षुत्पिपासा शीतो-ष्ण-दंश-मशक-नाग्न्या-ऽरति-स्त्री-चर्या-निषद्या-क्रोश-वध-याचना-ऽलाभ-तृणस्पर्श-मल-सत्कार-पुरस्कार-प्रज्ञा-ज्ञान-दर्शनभेदात् ।

आगमविहितविधिना जठरान्त्रविदाहनीं क्षुधां शमयतोऽनेषणीयं च परिहरतः सम्यग्विषहमाणस्य व्रतिनः क्षुत्परीषहजयो भवेत् ।

एवं रीत्याऽऽगमोक्तविहितविधिना जठरान्त्रविदाहनीं पिपासां शमयतोऽनेषणीयं च परिहरतः सम्यग्वि-

षहमाणस्य पिपासापरीषहजयो भवेत् ।

महति शीते पतिते सति धार्यमाणजीर्णवसनस्य परित्राणवर्जितस्याऽऽगमविहितविधिनैषणीयमेव कल्पं गवेषयत शीतपरीषहजयो भवेत्। न तु तस्मिन् समयेऽग्निं ज्वालयति, परान् वा तद्विषये प्रेरयति ।

महोष्णातपेन तप्तोऽपि न जलावगाहनादिकं व्यजनादिकं वा करोति, तदाऽऽपतितमुष्णं सहते, न, चोष्णवारणायातपत्रादिकं धारयति, एवं कुर्वत उष्णपरीषहजयो भवेत् ।

दंशमशकादिभिर्दश्यमानोऽपि न ततः स्थानादपगच्छेत्, न च व्यजनादिना निवारयति तान्, न वा तदपनोदार्थं धूमादिकं करोति, एवं कुर्वतो दंशमशकपरीषहजयो भवेत् ।

नाग्न्यं तावन्निरुपकरणतारूपं न भवति, किं तर्हि प्रवचनोक्तविधिना नाग्न्यं ज्ञेयम्। उत्सर्गाऽपवादपूर्वकौधिकौपग्राहिकोपधिधारिणः प्रव्रज्यादिद्वारसमधिगम्या आचार्योपाध्यायस्थविरभिक्षुक्षुल्लकविभागा मासकल्पविहारिणोऽल्पमूल्यजीर्णप्रायवसनस्थगिताऽग्रभागा वर्षाकल्पपरिभोगकारिणो दशविधसामाचार्यनुष्ठायिन उद्गमोदपादनैषणाशुद्धाहारोपधिशय्यासेविनो भिक्षवो भवन्ति। एवं सम्यक्परिपालयतो नाग्न्यपरीषहजयो भवेत् ।

कदाचिद्विहरतस्तिष्ठतो वा संयतस्य संयमे प्रीत्यभावरूपस्खलनासद्भावेऽपि सम्यग्धर्माराधनेनैव भवितव्यमेवं चिन्तयतोऽरतिपरीषहजयो भवेत्।

स्त्रीणामङ्ग-प्रत्यङ्ग-संस्थान-हसित-ललित-विभ्रमादि-चेष्टां न चिन्तयेत्, न जातुचिच्चक्षुरपि तासु कामबुद्ध्या निवेशयेत्, एवं कुर्वतः स्त्रीपरीषहजयो भवेत्।

ग्रामनगरकुलादिष्वनियतवसतिस्तर्जिताऽऽलस्यो निर्ममत्वः प्रतिमासं चर्यां गृह्णीयात्। एवं कुर्वतश्चर्यापरीषहजयो भवेत्।

स्त्रीपशुपण्डकवर्जितस्थाने इष्टानिष्टोपसर्गजयिनः, तत्राऽनुद्विग्नेन निषीदतो निषद्यापरीषहजयो भवेत्।

शय्यासंस्तारक-पट्टिकादिकं मृदुकठिनत्वादिभेदेनोच्चावचं प्रतिश्रयो वा पांशूत्करप्रचुरः शिशिरो बहुघर्मको भवेत्, तथापि तत्र नोद्विजेत् कदाचिदपि, एवं कुर्वतः शय्यापरीषहजयो भवेत्।

आक्रोशोऽनिष्टवचनं, तद् यदि सत्यं तर्हि कः कोपः शिक्षयति हि माम्, अयमुपकारी, न पुनरेवं करिष्यामीति, अविद्यमानं चेत् सुतरां कोपो न कार्यः, इति कुर्वत आक्रोशपरीषहजयो भवेत्।

वधस्ताडनं पाणिपार्ष्णिलताकपादिभिः, तदपि शरीरमवश्यतया विध्वंसत एवेति मत्वा सम्यक् सोढव्यमिति

कुर्वतो वधपरीषहजयो भवेत् ।

याचना मार्गणा, साधोर्वस्त्रपात्रान्नपानप्रतिश्रयादेः परतस्तस्य लब्धे सति न हर्षो, यदि च न लब्धं, न तदा शोकोऽपि, एवं कुर्वतो याचनापरीषहजयो भवेत् ।

अलाभस्तु याचिते सति विद्यमानमपि अन्नपानादिकं कदाचिद् ददाति, कदाचिच्च न, कस्तत्रासन्तोषावकाशः, एवं विचारयतोऽलाभपरीषहजयो भवेत् ।

रोगो ज्वरा-तिसार-कास-श्वासादिकरूपः, तस्य प्रादुर्भावे सत्यपि न चिकित्सां प्रति प्रवर्तेत, प्राक् कर्मणां परिपाकोऽयमिति चिन्तयेत्, गच्छवासिनस्तु अल्पबहुत्वालोचनया सम्यक् सहन्ते प्रवचनोक्तविधिना । एवं कुर्वतो रोगपरीषहजयो भवेत् ।

अशुषिरतृणदर्भादेः परिभोगोऽनुज्ञातो गच्छनिर्गतानां गच्छवासिनां च यत्र शयनमनुज्ञातं तत्र तान् तृणदर्भादीन् भूमावास्तीर्य संस्तारोत्तरपटकौ च तदुपरि पिधाय ते शेरते । चौरापहृतोपकरणा वा प्रतनुकौ संस्तारोत्तरपट्टकावत्यन्तजीर्णौ वा, तथापि तत्परुषकुशदर्भादितृणस्पर्शं सम्यक् सहन्ते । एवं कुर्वतः तृणस्पर्शपरीषहजयो भवेत् ।

मलस्तु रजःपरागमात्रं स्वेदवारिसंपर्ककाठिनीभूते वपुषि स्थिरतां प्राप्तो ग्रीष्मोष्मसंतापजनितघर्मजकार्द्रतां

गतो यद्यपि दुर्गन्धिमहान्तमुद्वेगमुत्पादयति । तथापि तदपनयनाय न कदाचिदपि अभिषेकाद्यभिलाषं करोति। एवं कुर्वतो मलपरीषहजयो भवेत्।

प्रज्ञा बुद्ध्यतिशयः, तं प्राप्तोऽपि गर्वं नोद्वहेदिति कुर्वतः, प्रज्ञाप्रतिपक्षीभूतेन मन्दबुद्धित्वं प्राप्तेन परीषहो भवति, नाऽहं किञ्चिज्जाने, मूर्खोऽहं सर्वैः परिभूतोऽहमेवं परितापागतस्य परीषहो भवति, तदकरणात् कर्मविपाको ऽयमिति चिन्तयतो वा प्रज्ञापरीषहजयो भवेत्।

ज्ञानं श्रुताख्यं चतुर्दशपूर्वरूपं द्वादशाङ्गरूपं वा मयाऽधीतं, समस्तश्रुतधरोऽहमिति वा गर्वमुद्वहते, तत्र चागर्वकरणात् ज्ञानपरीषहजयो भवेत्, अथवा ज्ञानप्रतिपक्षेणाविज्ञानेनागमशून्यतया परीषहो भवतीति ज्ञानावरणक्षयोपशमोदयविजृम्भितमेतदिति चिन्तयन् स्वकृतकर्मफलपरिभोगादपैति, तपोऽनुष्ठानेन च, एवं पर्यालोचयतो ज्ञानपरीषहजयोभवेत्।

अदर्शनपरीषहस्तु सर्वपापस्थानेभ्यो विरतः प्रकृष्टतपोऽनुष्ठायी निःसङ्गश्चाऽहं तथापि धर्माधर्मदेवनारकादीन् नेक्षे, मृगतृष्णासममेतदिति दर्शनपरीषहः। तत्रैवमालोचयेद्, धर्माधर्मौ पुण्यपापलक्षणौ यदि कर्मपुद्गलात्मकौ, ततस्तौ कार्यदर्शनादनुमीयेते। अथवा क्षमाक्रोधादिरूपौ, ततः स्वानुभवत्वादात्मपरिणामरूपत्वाच्च प्रत्यक्ष एव।

देवास्तु अत्यन्तरतसुखासक्तत्वाद् मनुष्यलोके च कार्याभावाद् दुःखानुभावाच्च दर्शनगोचरं न आयान्ति, नारकास्तु तीव्रवेदनार्त्ताः पूर्वकृतकर्मोदयनिगडबन्धनवशीकृतत्वादस्वतन्त्राः कथमायान्तीत्येवमालोचयतोऽदर्शनपरीषहजयो भवेत् ।

एते परीषहा ज्ञानावरणवेदनीयदर्शनचारित्रमोहनीयान्तरायलक्षणानां पञ्चानां कर्मप्रकृतीनामुदयेन प्रादुर्भवन्ति ।

तेषां च परीषहाणां मध्ये क्षुत्पिपासाशीतोष्णदंशमशकचर्याऽलाभप्रज्ञाऽज्ञानशय्यावधरोगतृणस्पर्शमललक्षणाश्चतुर्दश परीषहाः सूक्ष्मसंपरायस्य छद्मस्थवीतरागयतेश्च भवन्ति ।

तत्र संपरायो नाम लोभाख्यः कषायः, तस्य बादरखण्डानि परिशाटितानि, नवमे गुणस्थाने दशमे गुणस्थाने च सूक्ष्मलोभपरमाणवो विद्यन्ते ।

तथा च सूक्ष्मः संपरायो यस्यासौ सूक्ष्मसंपरायः शमकः क्षपको वा संयतस्तस्य सूक्ष्मसंपराययतेः छद्म आवरणं, तत्र स्थिताः छद्मस्थाः सावरणज्ञाना इत्यर्थः । वीतोऽपेतो रागः सकलमोहोपशमात् समस्तमोहक्षयाच्च यस्यासौ वीतरागः क्रमेणैकादशगुणस्थानवर्त्ती द्वादशगुणस्थानवर्त्ती च संयतौ ग्राह्यौ । एवं च दशमैकादशद्वादशगुणस्थानवर्त्तिषु संयतेषु पूर्वोक्ताश्चतुर्दश परीषहा भवन्ति ।

क्षुत्पिपासाशीतोष्णदंशमशकचर्याशय्यावधरोगतृण-स्पर्शमललक्षणा एकादश परीषहा जिने भवन्ति ।

सर्वे परीषहा बादरसंपराये भवन्ति ।

ज्ञानावरणोदये प्रज्ञाज्ञानपरीषहौ भवतः ।

ज्ञानावरणक्षयोपशमात् प्रज्ञाज्ञाने च । सत्येव हि ज्ञानावरणे तस्य क्षयोपशमो ज्ञानावरणोदयाच्चाप्रज्ञानिर्बुद्धिकत्वमज्ञानं चेति कथं पुनरिदमुभयं लभ्यते ? ।

अप्रज्ञा चाज्ञानं चाप्रज्ञाज्ञाने ज्ञानावरणोदये भवतः ।

दर्शनमोहान्तराययोरदर्शनालाभौ ।

दर्शनमोहोदयेऽदर्शनपरीषहोऽन्तरायोदये चालाभपरीषहः ।

चारित्रमोहोदये च नाग्न्यारतिस्त्रीनिषद्याक्रोशयाचनासत्कारपुरस्कारलक्षणाः सप्त परीषहा भवन्ति ।

तत्र जुगुप्सोदयाद् नाग्न्यम्, अरत्युदयादरतिः, स्त्रीवेदोदयात्स्त्रीपरीषहः, भयोदयाद् निषद्यापरीषहः, क्रोधोदयादाक्रोशपरीषहः, मानोदयाद् याचनापरीषहः, लाभोदयात् सत्कारपरीषहः, अवशिष्टपरीषहा वेदनीयोदयाद् भवन्ति । ये एकादश परीषहाः केवलिनां कथिताः, ते वेदनीयोदयजन्या एव ।

एषां द्वाविंशतिपरीषहाणां मध्ये एकादयो भजनीयाः । तथा चैकस्मिन् जीवे युगपदा एकोनविंशतेः । तत्र च शी-

तोष्णौ युगपन्न भवतोऽत्यन्तविरोधित्वात् ।

चर्याशय्यानिषद्यानां मध्ये एकस्य संभवे द्वयोरभाव एव ।

उक्ताः परीषहाः । अथ मुख्यतया संवरकारणं चारित्रं प्रतिपाद्यते लक्षणविधानाभ्याम्—

तत्र च चारित्रस्य लक्षणं पूर्वोक्तमपि प्रकारवशादत्रापि कथ्यते—

सावद्ययोगविरतिरूपत्वं चारित्रस्य लक्षणम् ।

तच्च पञ्चधा, सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसंपराययथाख्यातलक्षणचारित्रभेदात् ।

अत्रापि प्रथमतः सामायिकचारित्रस्य शब्दार्थप्रतिपादनद्वारा स्वरूपं कथ्यते—

तत्र समो रागद्वेषविरहरूप आयो लाभः, अथवाऽयोगमनं, सकलक्रियोपलक्षणमेतत्, सर्वा च क्रिया साधो रागद्वेषवियुक्तस्य निर्जराफला, तादृशसमस्यायः समायः, तदेव सामायिकम् ।

तच्च द्विविधम्, इत्वरयावज्जीवसामायिकभेदात् ।

तत्र प्रथमं प्रथमचरमतीर्थंकरतीर्थयोः प्रव्रज्याप्रतिपत्तावारोपितम्, ततः शस्त्रपरिज्ञाध्ययनादिविदः श्रद्धतः ।

छेदोपस्थापनीयसंयमारोपणे विशिष्टतरत्वाद् विरतेः सामायिकव्यपदेशं जहातीति, द्वितीयं तु मध्यमतीर्थकृतां

महाविदेहक्षेत्रवर्त्तिनां च यतीनां यावज्जीवम्।

प्रथमापेक्षया विशुद्धतरसर्वसावद्ययोगाविरतावस्थानरूपत्वम्, विविक्ततरमहाव्रतारोपणरूपत्वम्, पूर्वपर्यायच्छेदपूर्वकपर्यायान्तरे उपस्थापनरूपत्वं वा छेदोपस्थापनीयस्य लक्षणम्।

तदपि द्विविधं, सातिचारं निरतिचारं च।

अधीतविशिष्टाध्ययनकानां प्रथमचरमतीर्थंकरशिष्याणां निरतिचारं, सातिचारं तु भग्नस्य मूलगुणस्य पुनर्व्रतारोपणे च्छेदोपस्थापनीयम्, उभयं चैतत् स्थितकल्पे वाद्यन्ततीर्थंकरतीर्थयोरिति भावः।

सावद्ययोगाविरतिरूपत्वे सति तपोविशेषेण विशुद्धरूपत्वम्, यस्मिन् सति तपोविशेषेण सावद्ययोगविरतस्य विशुद्धता भवति तद्रूपत्वं वा परिहारविशुद्धचारित्रस्य लक्षणम्।

तदपि द्विविधं, निर्विश्यमानकानिर्विष्टकायिकभेदात्।

तत्र निर्विश्यमानकं नाम परिभुज्यमानकं, निर्विष्टकायिकं नामोपभुक्तम्। निर्विष्टः तपोऽनुष्ठानद्वारेण परिभुक्तः कायो यैस्ते निर्विष्टकायिकाः।

अतिसूक्ष्मसंज्वलनलोभकषायसत्त्वविषयकत्वम्, गुणश्रेणिसमारोहणे सति दशमगुणस्थानवर्तिरूपत्वं वा सूक्ष्मसंपरायचारित्रस्य लक्षणम्।

समस्तचारित्रमोहस्योपशमक्षयान्यतरूपत्वे सति शुद्धात्मस्वभावावस्थानापेक्षारूपत्वं यथाख्यातचारित्रस्य लक्षणम् ।

इति ए-एम्-ए-एस्-बीत्युपाधियुक्त-शास्त्रविशारद-जैनाचार्य-श्रीमद्वि-
जयधर्मसूरीश्वरचरणारविन्दभृङ्गायमाणेन न्यायतीर्थ-न्यायवि-
शारदोपाधियुक्तेन प्रवर्त्तकश्रीमङ्गलविजयेन विरचिते
जैनतत्त्वप्रदीपाख्ये ग्रन्थे संवरतत्त्ववर्णननामा
पञ्चमोऽधिकारः समाप्तः ।



# षष्ठोऽधिकारः ।

अथ लक्षणविधानाभ्यां निर्जरास्वरूपं प्रतिपाद्यते-

लक्षणं तु प्रागुक्तमपि प्रकरणवशादत्रापि निगद्यते-

परिपक्वभूतानां कर्मावयवानामात्मप्रदेशेभ्यः परिशाटनरूपत्वं निर्जराया लक्षणम् ।

सा च निर्जरा तपसा भवति ।

अभिनवकर्मप्रवेशाभावरूपत्वे सति पूर्वोपार्जितकर्मपरिक्षयरूपत्वं तपसो लक्षणम् ।

तपः सेव्यमानेनात्मप्रदेशेभ्यः कर्माणि विधूयन्ते । शुष्करसीभूतं कर्म निःस्नेहं सद् बन्धनात् परिशटतीत्यर्थः ।

तेनैव तपसा संवरो भवति निर्जरा च । तथाहि— अनशनादिप्रायश्चित्तध्यानादितया युक्तोऽवश्यतयैव संवृताश्रवद्वारो भवति ।

तच्च तपो द्विविधं, बाह्याभ्यन्तरभेदात् ।

तत्रापि बाह्यं षोढा, अनशनावमौदर्यवृत्तिपरिसंख्यानरसपरित्यागविविक्तशयनासनलीनतालक्षणबाह्यतपोभेदात् ।

अथ तेषां लक्षणद्वारा स्वरूपमुच्यते—

संयमरक्षणकर्मनिर्जराप्रयोजनत्वे सति चतुर्थषष्ठाष्टमादिरूपत्वं सम्यगनशनतपसो लक्षणम् ।

अवमौदर्यं नाम न्यूनाहारः, तच्चाहारपरिमाणे ज्ञाते सत्यवमौदर्यं ज्ञायते। तथा चाहारपरिमाणं कथ्यते।

तत्र पुंसो द्वात्रिंशत्कवलप्रमाणमाहारः।

अष्टकवलाभ्यवहाररूपत्वे सति न्यूनोदररूपत्वमुत्कृष्टावमौदर्यस्य लक्षणम्।

द्वादशकवलाभ्यवहाररूपत्वे सति न्यूनोदररूपत्वमुपार्धावमौदर्यस्य लक्षणम्।

द्वात्रिंशत्कवलाहारस्य मध्ये एकेनोनाहाररूपत्वे सति किञ्चिन्न्यूनोदररूपत्वं जघन्यावमौदर्यस्य लक्षणम्।

निक्षिप्तचणादीनां कुल्मासादीनां च मध्येऽन्यतममभिगृह्य शेषस्य च प्रत्याख्यानरूपत्वं वा, भैक्ष्यस्यागमविहितविधिनाभिग्रहकरणरूपत्वं वा वृत्तिपरिसंख्यानस्य लक्षणम्।

मधु-मद्य-मांस-नवनीतलक्षणाभक्ष्यस्य सर्वथा परित्यागे सति क्षीर-दधि-गुड-तैलादिरूपभक्ष्यविकृतीनां कारणमुक्त्वाऽन्यत्र परित्यागे च सति विरसद्रव्यादिविषयकाभिग्रहकरणरूपत्वं रसपरित्यागलक्षणबाह्यतपसो लक्षणम्।

गर्हितजनसंपातरहितत्वे सति एकान्तेन बाधारहितस्थाने शय्यासनकरणरूपत्वं विविक्तशय्यासनलक्षणबाह्यतपसो लक्षणम्।

शून्यागारदेवकुलसभापर्वतगुहादीनां मध्येऽन्यतमस्मिन् स्थाने समाध्यर्थे[1] व्यवस्थानलक्षणगात्रसंकोचनकरणरूपत्वं लीनतारूपबाह्यतपसो लक्षणम्।

आगमानुसारेणात्मनः कायद्वारेण वीरासनाद्यासनजन्यबाधासहनरूपत्वं कायक्लेशरूपबाह्यतपसो लक्षणम्।'

यदि लीनताऽत्रान्तर्भूता, तर्हि पृथग् न वक्तव्या, किन्तु वैराग्यार्थं पृथगुच्यते। यदि चास्यापेक्षया किञ्चिद्भेदमुपादाय भिन्ना कथ्यते ततः सुतरां भिन्नप्रतिपादनमस्याः।

अथवा कायोत्सर्गवीरासनोत्कटुकासनैकपार्श्वदण्डायतशयनातापनलुञ्चनादिकष्टरूपत्वं कायक्लेशस्य लक्षणम्।

ईदृग्लक्षणं यद्युच्यते, तर्हि लीनताया लक्षणं सर्वथा न वक्तव्यं, अनेनैव गतार्थत्वात्।

अस्मात् षड्विधाद् बाह्यतपसः संगत्यागशरीरलाघवेन्द्रियजयसंयमरक्षणकर्मनिर्जरादयो भवन्ति।

तत्र निःसङ्गो नाम बाह्याभ्यन्तरोपाधिषु निर्ममता। ततश्च मासकल्पविहारस्थायोग्यतावर्जनात् शरीरलाघवम्, ततश्चाप्रणीतशरीरस्योन्मादानुद्रेकादिन्द्रियजयः, ततश्च भक्तपानार्थं गच्छतश्चर्याजनितजन्तूपघाताभावात् संयमरक्षणं, ततश्च निःसङ्गादिगुणयोगादनशनादितपो-

---

१. तत्र समाधिर्नाम ज्ञानदर्शनचारित्रतपोवीर्यात्मकः पञ्चधा, तेषां या वृद्धिस्तस्या इच्छा तदर्थमित्यर्थः।

ऽनुष्ठितस्य शुभध्यानव्यवस्थितस्य कर्मनिर्जराऽवश्यतया भवतीति बाह्यतपोद्वाराऽपि कर्मनिर्जरा प्रतिपादिता ।

अथाभ्यन्तरतपःस्वरूपं लक्षणविधानाभ्यां प्रतिपाद्यते-

अतिशयेन कर्मनिर्दहनसमर्थरूपत्वमाभ्यन्तरतपसो लक्षणम् ।

तदपि षोढा, प्रायश्चित्त-विनय-वैयावृत्त्य-स्वाध्यायोत्सर्ग-ध्यानलक्षणाभ्यन्तरतपोभेदात् ।

बाहुल्येन चित्तशुद्धिजननिमित्तकत्वं प्रायश्चित्तस्य लक्षणम् ।

तच्च नवविधम्, आलोचनप्रतिक्रमणतदुभयविवेक-व्युत्सर्ग-तपश्छेदपरिहारोपस्थापनलक्षणप्रायश्चित्तभेदात् ।

मर्यादया गुरोर्निवेदनरूपत्वं वा, पिहिताख्यानस्य गर्हाद्वारेण प्रकाशनरूपत्वं वालोचनप्रायश्चित्तस्य लक्षणम् ।

अतिचाराभिमुख्यपरिहारपूर्वकं पापादपसरणरूपत्वं वा, मिथ्यादुष्कृतसंयुक्तस्य सतः पश्चात्तापप्रत्याख्यानकायोत्सर्गादिकरणरूपत्वं वा प्रतिक्रमणप्रायश्चित्तस्य लक्षणम् ।

आलोचनप्रतिक्रमणोभयरूपत्वं तदुभयरूपप्रायश्चित्तस्य लक्षणम् ।

अन्नपानोपधिशय्यादिषु च शुद्धाशुद्धादिविवेचनरूपत्वं विवेकप्रायश्चित्तस्य लक्षणम् ।

---

१ प्रत्याख्यानं नैवं करिष्यामीत्येवंरूपम् ।

अनेषणीयान्नपानोपकरणादिषु प्रणिधानपूर्वकनिरोधरूपत्वमुत्सर्गप्रायश्चित्तस्य लक्षणम् ।

तपस्तूक्तमेव ।

महाव्रतारोहणकालादारभ्य संजातदिवसपक्षमाससंवत्सरादीनां मध्येऽन्यतमस्य प्रव्रज्याकालस्यापहारकरणरूपत्वं च्छेदप्रायश्चित्तस्य लक्षणम् ।

पक्षमाससंवत्सरादिकमवधिभूतं कृत्वा संसर्गं विना दूरतः परित्यागकरणरूपत्वं परिहारप्रायश्चित्तस्य लक्षणम् ।

पुनर्व्रतारोपणरूपत्वमुपस्थापनाप्रायश्चित्तस्य लक्षणम् ।

तदेतद् नवविधं प्रायश्चित्तं देशशक्तिसंहननं संयमविराधनां कायेन्द्रियजातिगुणोत्कर्षं च प्राप्य विशुद्ध्यर्थं यथाऽर्हं दीयते, आचर्यते च ।

उक्तं प्रायश्चित्तम् । संप्रति विनयः प्रतिपाद्यते ।

अष्टविधकर्मापनयननिमित्तकत्वं विनयरूपाभ्यन्तरतपसो लक्षणम् ।

स चतुर्धा, ज्ञानदर्शनचारित्रोपचारविनयभेदात् ।

अथ तेषां लक्षणमुच्यते—

ये भावा जिनेन्द्रैः कथिताः, तान् तथैव श्रद्दधाति नान्यथेत्यङ्गीकाररूपत्वं दर्शनविनयस्य लक्षणम् ।

ज्ञानशिक्षाभ्यासकरणरूपत्वे सति ज्ञानेन सुकृतसंचयपूर्वकनूतनकर्मबन्धाकरणरूपत्वं ज्ञानविनयस्य लक्षणम् ।

अष्टविधकर्मचयरिक्तकरणनिमित्तकत्वे सति नूतनकर्मबन्धाकरणरूपत्वं चारित्रविनयस्य लक्षणम् ।

तत्र ज्ञानविनयः पञ्चधा, मत्यादिज्ञानपञ्चकभेदात् ।

दर्शनविनयशब्देन सम्यग्दर्शनविनय उच्यते । अतः तस्य स्वरूपं निगद्यते—

अर्हत्प्रणीतस्य धर्मस्याचार्योपाध्यायस्थविरकुलगणसंघसाधुसांभोगिकानामनासादनप्रशमसंवेगनिर्वेदानुकम्पास्तिक्यसंपादनद्वारा सम्यग्दर्शनविनयो भवति ।

चारित्रविनयः पञ्चधा, पञ्चविधचारित्रभेदात् ।

सम्यग्दर्शनज्ञानचारित्रादिगुणाधिकेऽभ्युत्थानासनप्रदानवन्दनानुनमनादिकरणरूपत्वमुपचारविनयस्य लक्षणम् ।

वैयावृत्त्यं प्रतिपाद्यते—

तच्च दशधा, अर्हदाचार्योपाध्यायतपस्विशैक्षकग्लानकुलसंघसाधुसमनोज्ञवैयावृत्त्यभेदात् ।

प्रकृष्टतपोयुक्तः तपस्वी तस्य वैयावृत्त्यम्, अचिरप्रव्रजितः शैक्षकः, अथवा शिक्षामर्हतीति शैक्षः, शिक्षणशीलः शैक्षः, तस्य वैयावृत्त्यम्; स्थविरसंततिसंस्थितिर्गणः, कुलमेकाचार्यसंततिसंस्थितिः, संघश्चतुर्विधः ।

मूलोत्तरगुणसंपन्नाः साधवो मनोज्ञाः, मनोज्ञानिवा ज्ञानदर्शनचारित्राणितैः सह वर्तन्ते ते समनोज्ञाः ।

एषां वस्त्रपानान्नपानप्रतिश्रयपीठफलकसंस्तारका-दिभिर्धर्मसाधनैर्वैयावृत्त्यं कार्यम्।

अपि च, शुश्रूषाभेषजक्रियाकान्तारविषमदुर्गोपसर्गे-ष्वभ्युपपत्तिरित्यादिरूपं वैयावृत्त्यं कार्यम्।

स्वाध्यायः पञ्चधा, वाचनाप्रच्छनानुप्रेक्षाम्नायध-र्मोपदेशभेदात्।

तेषां लक्षणं तु क्रमेण निगद्यते—

शिष्याध्यापनरूपत्वं, कालिकोत्कालिकस्यालापक्रम-दानरूपत्वं वा वाचनाया लक्षणम्।

संशयदूरीकरणार्थं सूत्रार्थयोः प्रच्छनरूपत्वं प्रच्छ-नाया लक्षणम्।

उदात्तादिघोषपरिशुद्धिपूर्वकपरावर्त्तनरूपत्वमाम्नायस्य लक्षणम्।

श्रुतचारित्रलक्षणधर्मोपदेशरूपत्वमुपदेशस्य लक्षणम्।

प्रवचनोक्तविधिना संसक्तासंसक्तान्नपानवस्त्रपात्रा-दीनां व्युत्सर्गो भवति; स च द्विविधो बाह्याभ्यन्तरभेदात्। तयोः क्रमेण लक्षणं निगद्यते-पर्यन्तकालं परिज्ञायौधिकौ-पग्राहिकोपधिशरीरादीनां परित्यागकरणरूपत्वं बाह्यव्यु-त्सर्गस्य लक्षणम्।

कामक्रोधमदहर्षादीनां परित्यागकरणरूपत्वमाभ्यन्त-रव्युत्सर्गस्य लक्षणम्।

अथ ध्यानं प्रतिपाद्यते । तत्र प्रथमतो ध्यानस्य सामान्यलक्षणमुच्यते —

उत्तमसंहननस्यैकाग्रचिन्तानिरोधरूपत्वं ध्यानसामान्यस्य लक्षणम् ।

तच्च ध्यानं चतुर्विधमार्त्तरौद्रधर्मशुक्लभेदात् ।

शोकाक्रन्दनविलपनादिरूपत्वमार्त्तध्यानस्य लक्षणम् ।

क्रूरपरिणामादिरूपत्वं रौद्रध्यानस्य लक्षणम् ।

जिनप्रणीतभावश्रद्धानादिनिमित्तकत्वं धर्मध्यानस्य लक्षणम् ।

अबाध्यासंमोहादिकरणरूपत्वं शुक्लध्यानस्य लक्षणम् ।

तच्च ध्यानमन्तर्मुहूर्त्तकालपरिमाणं भवति, नाधिकं, शक्त्यभावात्, मोहनीयकर्मानुभावात्, क्लेशाद् वा ।

तादृशचतुर्विधध्यानानां मध्ये धर्मशुक्ले मोक्षहेतू भवतः, आर्त्तरौद्रे च संसारहेतू भवतः ।

---

१ अत्र उत्तमसंहननपदेन वज्रर्षभनाराचर्षभनाराचनाराचलक्षणानि त्रीणि संहननानि गृह्यन्ते, तद्वदेकाग्रचिन्तानिरोधो ध्यानमुच्यते, तथा चोत्तमसंहननस्यैकस्मिन्नालम्बनीभूते पदार्थे चिन्तानिरोधो यः तद् ध्यानं कथ्यते । चिन्तानिरोधस्तु, चलचित्तमेव चिन्ता तस्य निरोध एकत्रावस्थापनम्, अन्यत्र प्रचारनिरोधो वा, तत्र छद्मस्थविषयं ध्यानं निश्चलं स्थिरमध्यवसानमेकालम्बनीभूतम्; केवलिनां पुनर्योगनिरोध एव ध्यानं मनसोऽभावात्; न हि अवाप्तकेवलस्य मनोव्यापारः समस्ति, सकलकरणग्रामनिरपेक्षत्वात् ।

अथ प्रत्येकं पुनश्चतुर्विधं, तदपि लक्षणतो निगद्यते—

अनिष्टशब्दादिविषयाणां संबन्धे सति कथं तेषां वियोगः स्यादिति चिन्ताप्रबन्धरूपत्वं प्रथमार्त्तध्यानस्य लक्षणम् ।

प्रकुपितवातपित्तश्लेष्मसंनिपातनिमित्तैरुपजातायाः शूल-शिरः-कम्प-ज्वरादिरूपवेदनाया विप्रयोगार्थं चिन्ताप्रबन्धरूपत्वं वेदनोत्थद्वितीयार्त्तध्यानस्य लक्षणम् ।

इष्टशब्दादिविषयाणां संबन्धे सति भूयोऽपि तैः सह मे संयोग एव स्यान्न वियोग इति चिन्ताप्रबन्धरूपत्वं तृतीयार्त्तध्यानस्य लक्षणम् ।

कामोपहतचित्तानां जनानां देवेन्द्रचक्रवर्त्यादिरूपपुनर्भवविषयकसुखार्थं निदानकरणरूपचिन्ताप्रबन्धरूपत्वं चतुर्थार्त्तध्यानस्य लक्षणम् ।

तदेतदार्त्तध्यानमविरतिदेशविरतिप्रमत्तसंयतपर्यन्तमेव भवति न परतः ।

अथ रौद्रभेदा लक्षणतः प्रतिपाद्यन्ते—

सत्त्वव्यापादनोद्बन्धनपरितापनादिरूपहिंसाविषयकचिन्ताप्रबन्धरूपत्वं हिंसानुबन्धिप्रथमरौद्रध्यानस्य लक्षणम् ।

असद्भूतघाताभिसंधानप्रवणानुपरततीव्रभयङ्कराशयपूर्वकचिन्ताप्रबन्धरूपत्वं मृषानुबन्धिद्वितीयरौद्रध्यानस्य लक्षणम् ।

द्रव्यहरणोपाये चेतसोऽनिरोधविषयकाचिन्ताप्रबन्धरूपत्वं वा लोभकषायोदयेनातुरचेतसस्तद्विषयकाचिन्ताप्रबन्धरूपत्वं स्तेयानुबन्धितृतीयरौद्रध्यानस्य लक्षणम् ।

विषयार्जनपरिपालनव्ययप्रयोजनाचिन्ताप्रबन्धरूपत्वं विषयानुबन्धिचतुर्थरौद्रध्यानस्य लक्षणम् ।

अथ रौद्रस्य सामान्यलक्षणमुच्यते—

नानाप्रकारहिंसाद्युपायेषु प्रवर्त्तमानस्य महामोहाभिभूतस्य तीव्रवधबन्धनसंक्लिष्टाध्यवसायस्य नानाविधाशुभपरिणामविषयकचिन्ताप्रबन्धरूपत्वं सामान्यरौद्रध्यानस्य लक्षणम् ।

तच्च ध्यानमाविरतदेशविरतपर्यन्तमेव भवति न परतः ।

अथ धर्मध्यानभेदा लक्षणतः प्रतिपाद्यन्ते—

आगमार्थनिर्णयानुचिन्तनरूपत्वं वा, पूर्वापरविरोधरहिताशेषजीवहितावहानवद्यमहार्थद्रव्यपर्यायगुम्फितसर्वज्ञप्रणीतागमार्थावधारणविषयकाचिन्ताप्रबन्धरूपत्वं वा, सर्वज्ञप्रणीतागमार्थावधारणविषयकाचिन्ताप्रबन्धरूपत्वमाज्ञाविचयधर्मध्यानस्य लक्षणम् ।

गौरवविकथाप्रमादपरीपहादिभिः सन्मार्गादपतनानुचिन्तनप्रबन्धरूपत्वं वा, मूलोत्तरप्रकृतिविभागार्पितजन्मजरामरणार्णवपरिभ्रमणपरिखिन्नान्तरात्मनः सांसारिकसुखप्रपञ्चेष्वपायपरिचिन्तनरूपत्वं वा, मिथ्यात्वाद्य-

चचेतोभिः कुदृष्टिभिः प्रणीतादुन्मार्गात् कथं नामेमे प्राणिनोऽपेयुरिति चिन्ताप्रबन्धरूपत्वं वाऽपायविचयधर्मध्यानस्य लक्षणम्।

शुभाशुभकर्मविपाकानुचिन्ताप्रबन्धरूपत्वं वा, नरकतिर्यग्नरामरभवेषु कर्मणामनुभावानुचिन्तनरूपत्वं वा विपाकविचयधर्मध्यानस्य लक्षणम्।

द्रव्यक्षेत्रसंनिवेशानुगमनानुचिन्तनप्रबन्धरूपत्वं वा, पञ्चास्तिकायात्मकलोकस्य संस्थानस्वभावानुचिन्तनप्रबन्धरूपत्वं वा संस्थानविचयधर्मध्यानस्य लक्षणम्।

तच्च धर्मध्यानमप्रमत्तस्योपशान्तकषायक्षीणकषाययोश्च संभवति नान्यस्य।

उक्तं धर्मध्यानम्। अथ क्रमप्राप्तशुक्लध्यानभेदा लक्षणतो निगद्यन्ते—

पूर्वगतश्रुतविषयकार्थव्यञ्जनयोगान्योन्यसंक्रमणविषयकत्वे मतिं द्रव्यपर्यायगुणान्तरसंचारविषयकत्वं वा, परालम्बनं विना निर्मलशुद्धात्मस्वरूपानुचिन्तनरूपत्वं वा, जीवाजीवस्वभावविभावानां पृथक्करणे सति द्रव्यपर्याययोः पृथग्ध्यायन् सन् पर्यायस्य गुणे, गुणस्य पर्याये वा संक्रमणकरणरूपत्वं वा, वितर्कविचारपृथक्त्वैः सह संयुक्तं सदीपचलत्तरङ्गाब्धेः क्षोभाभावदशातुल्यं यद् तद्रूपत्वं वा पृथक्त्ववितर्कसप्रविचारशुक्लध्यानस्य लक्षणम्।

एकत्ववितर्काप्रविचारैः संयुक्तं सन्निर्वातस्थप्रदीपतुल्यं

यत् तद्रूपत्वमेकत्ववितर्कामविचारशुक्लध्यानस्य लक्षणम् ।

सूक्ष्मक्रियाप्रतिपातिरूपत्वं वा निरुद्धयोगद्वयावस्थात्वे सति केवलकायव्यापारवतां यद्ध्यानं तत् तृतीयशुक्लध्यानस्य लक्षणम् ।

व्युपरतक्रियानिवृत्तिरूपत्वं वा शैलेश्यवस्थानां ह्रस्वाक्षरोच्चारणसमकालानां योगत्रयरहितानां यद्ध्यानं भवति तत् चतुर्थशुक्लध्यानस्य लक्षणम् ।

पृथक्त्ववितर्कसप्रविचारैकत्ववितर्काप्रविचारलक्षणे शुक्लध्याने उपशान्तकषायक्षीणकषाययोर्भवतः ।

अथ भावार्थः प्रतिपाद्यते—

षण्णां द्रव्याणां मध्ये एकद्रव्ये उत्पादव्ययध्रौव्यादिपर्यायानेकतयार्पितत्वं पृथक्त्वं तस्य चिन्तनं वितर्कसहचरितं सप्रविचारं यत्र तत् पृथक्त्ववितर्कसप्रविचारं, तत्र वितर्कः श्रुतं विचारोऽर्थव्यञ्जनयोगसंक्रान्तिः । तथा च फलितलक्षणमुच्यते--पूर्वगतभाङ्गिकश्रुतानुसारेणार्थव्यञ्जनयोगान्तराणां यत्र संक्रान्तिस्तत्रैव निरोधरूपत्वं प्रथमशुक्लध्यानस्य लक्षणम् ।

तथा चार्थाद् व्यञ्जनसंक्रान्तिः, मनोयोगात् काययोगसंक्रान्तिः, काययोगाद् मनोयोगसंक्रान्तिः, एवं वाग्योगाद्मनोयोगसंक्रान्तिः, काययोगसंक्रान्तिश्च । एवं रीत्यार्थव्यञ्जनयोगसंक्रान्तिर्ज्ञेया ।

एकत्वगतो वितर्क एकत्ववितर्कः, त्रयाणामेक एव योगस्तथार्थव्यञ्जनमपि एकमेव। तथा च फलितलक्षणमुच्यते-उत्पादव्ययध्रौव्यादिपर्यायाणामेकस्मिन् पर्याये निष्प्रकम्पपूर्वगतश्रुतानुसारिचेतसा चिन्तनरूपत्वं वा, पर्यायान्तरानर्पितैकपर्यायचिन्तनरूपत्वं वा द्वितीयशुक्लध्यानस्य लक्षणम्, निर्वातस्थप्रदीपवत्।

आद्ये शुक्लध्याने पूर्वविदो भवतः।

परे द्वे केवलिनस्त्रयोदशचतुर्दशगुणस्थानयोः क्रमेण भवतः, न छद्मस्थस्य।

तदेतच्चतुर्विधशुक्लध्यानं त्रियोगायोगानां भवति।

तत्र त्रियोगानां पृथक्त्ववितर्कलक्षणप्रथमशुक्लध्यानम्, त्रयाणां मध्येऽन्यतमैकयोगानामेकत्ववितर्कलक्षणद्वितीयशुक्लध्यानम्, काययोगानां सूक्ष्मक्रियाप्रतिपत्तिलक्षणतृतीयशुक्लध्यानम्। अयोगानां व्युपरतक्रियानिवृत्तिलक्षणचतुर्थशुक्लध्यानम्।

एकद्रव्याश्रये सवितर्के पूर्वध्याने, तत्रापि सविचारं प्रथमम्, अविचारं द्वितीयम्।

एतदभ्यन्तरतपः संवरत्वादभिनवकर्मोपचयप्रतिषेधकं पुराणकर्मनिर्जरकं पूर्वोपचितकर्मनिर्जरत्वाच्च निर्वाणप्रापकम्।

किंच, सम्यग्दृष्ट्यादीनां क्रमशोऽसंख्येयगुणनिर्जरा भवति। तथाहि-सम्यग्दृष्ट्यपेक्षया श्रावकस्यासंख्येयगुण-

निर्जरा भवति, श्रावकापेक्षया विरतस्य, तदपेक्षयानन्तानुबन्धिवियोजकस्य, तदपेक्षया दर्शनमोहक्षपकस्य, तदपेक्षया मोहोपशमकस्य, तदपेक्षयोपशान्तमोहस्य, तदपेक्षया मोहक्षपकस्य, तदपेक्षया क्षीणमोहस्य, तदपेक्षया जिनस्य ।

अस्य वैचित्र्यभागिनः संवरचारित्रस्य के स्वामिन इति प्रदर्शनार्थमुच्यते,

पुलाकबकुशकुशीलनिर्ग्रन्थस्नातका निर्ग्रन्था भवन्ति ।

लक्षणवाक्यं तु निगद्यते—

निर्वाणहेतुभूतजिनोक्तागमादपरिभ्रष्टश्रद्धानपूर्वकज्ञानानुसारेण क्रियानुष्ठायित्वे सति लब्ध्युपजीवितरूपत्वं पुलाकनिर्ग्रन्थस्य लक्षणम् ।

स च पुलाकः पञ्चविधः, ज्ञान-दर्शन-चरण-लिङ्ग-सूक्ष्मपुलाकभेदात्, तेषां क्रमेण लक्षणमुच्यते ।

आवश्यकादिसूत्रविषयकस्खलनादिकरणरूपत्वं ज्ञानपुलाकस्य ।

कुदृष्टिभिः सह संस्तवादिकरणरूपत्वं दर्शनपुलाकस्य ।

मूलोत्तरगुणप्रतिसेवनासंपादनत्वं चरणपुलाकस्य ।

प्रवचनोक्तलिङ्गस्याधिकरणरूपसंपादनत्वं लिङ्गपुलाकस्य ।

किञ्चित्प्रमादकरणरूपत्वं सूक्ष्मपुलाकस्य ।

मोहक्षयार्थं प्रस्थितस्य शरीरोपकरणविभूषानुवर्तित्वे सति ऋद्धियशःकामशातागौरवाश्रितत्वे च सति च्छेदशबलयुक्तत्वं बकुशनिर्ग्रन्थस्य लक्षणम्।

स च बकुशः पञ्चविधः, आभोगा-ऽनाभोग-संवृत्ता-ऽसंवृत्तसूक्ष्मबकुशभेदात्, लक्षणमपि तेषां क्रमेण निगद्यते।

संचित्यकार्यकारित्वमाभोगबकुशस्य लक्षणम्।

सहसात्कार्यकारित्वमनाभोगबकुशस्य लक्षणम्।

प्रच्छन्नकार्यकारित्वं संवृत्तबकुशस्य लक्षणम्।

प्रकटकार्यकारित्वमसंवृत्तबकुशस्य लक्षणम्।

किञ्चित्प्रमादरूपत्वं सूक्ष्मबकुशस्य लक्षणम्।

कुशीला द्वेधा, प्रतिसेवनकुशील-कषायकुशीलभेदात्।

मोहक्षयार्थं प्रस्थितस्यानियमितेन्द्रियप्रयुक्तत्वे सति कथञ्चित् किञ्चिदुत्तरगुणेषु विराधनारूपत्वं प्रतिसेवनाकुशीलस्य लक्षणम्।

प्रतिसेवनाकुशीलोऽपि पञ्चविधः, ज्ञान-दर्शन-चरण-लिङ्ग-सूक्ष्मप्रतिसेवनाकुशीलभेदात्, लक्षणं तेषां क्रमेणोच्यते।

ज्ञानातिचारसेवित्वं ज्ञानकुशीलस्य।

दर्शनातिचारसेवित्वं दर्शनकुशीलस्य।

चारित्रातिचारसेवित्वं चरणकुशीलस्य।

वस्त्रपात्रादिविषयकशास्त्रोक्तमर्यादातिवर्त्तित्वं लिङ्गकुशीलस्य।

सूक्ष्मातिचारसेवित्वं सूक्ष्मकुशीलस्य ।

कषायकुशीलोऽपि पञ्चविध एव ज्ञातव्यः ।

मूलोत्तरगुणोपेतसंयतानामपि कथंचित् संज्वलन-कषायाणामुदीरणाकरणरूपत्वं कषायकुशीलनिर्ग्रन्थस्य लक्षणम् ।

वीतरागच्छद्मस्थत्वे सति एकसमयावस्थायीर्यापथ-कर्मनिमित्तकत्वं निर्ग्रन्थस्य लक्षणम् ।

प्रक्षालितसकलघातिकर्मपटलत्वे सति शैलेश्यवस्था-प्रतिपन्नरूपत्वं स्नातकनिर्ग्रन्थस्य लक्षणम् ।

एते पुलाकादयो निर्ग्रन्था एभिः संयमश्रुतप्रतिसे-वनातीर्थलिङ्गलेश्योपपातस्थानरूपव्याख्याप्रकारैः प्ररूप-णीया भवन्ति ।

तत्र प्रथमं संयमद्वारम् ।

तत्र पुलाकबकुशप्रतिसेवनाकुशीलाः सामायिकच्छेदो-पस्थाप्यचारित्रयोर्भवन्ति ।

कषायकुशीलः परीहारविशुद्धिसूक्ष्मसंपरायचारित्र-योर्भवति ।

निर्ग्रन्थस्नातकौ यथाख्यातचारित्रे भवतः ।

श्रुतद्वारम् ।

पुलाकबकुशप्रतिसेवनाकुशीलानामुत्कृष्टतो दशपूर्व-पर्यन्तं तथा कषायकुशीलनिर्ग्रन्थानां तु चतुर्दशपूर्वपर्यन्तं

तथा स्नातकस्य तु श्रुतज्ञानं न भवति किन्तु केवलज्ञानमेव भवति।

जघन्यतः श्रुतं पुलाकस्य नवमपूर्वान्तःपातितृतीयाचारवस्तुपर्यन्तं, बकुशकुशीलनिर्ग्रन्थानान्त्वष्टौ प्रवचनमातरः।

प्रतिसेवनाद्वारम्।

रात्रिभोजनविरतिषष्ठानां पञ्चानां मूलगुणानां मध्येऽन्यतमं राजाद्यभियोगेन पुलाको विराध्यति, न तु स्वतः।

बकुशो द्विविधः, उपकरणबकुश-शरीरबकुशभेदात्।

विविधविचित्रमहाधनोपकरणविषयकबहूपकरणविषयकाभिलाषायुक्तत्वे सति नित्यं तत्प्रतिसंस्कारसेवित्वमुपकरणबकुशस्य लक्षणम्।

शरीरस्याभ्यञ्जनोद्वर्त्तनस्नानादिप्रतिसंस्कारसेवित्वं शरीरबकुशस्य लक्षणम्।

कुशीलो द्विविधः, कषायकुशीलप्रतिसेवनाकुशीलभेदात्।

तत्र प्रतिसेवनाकुशीलस्य मूलगुणानामविराधकत्वे सति उत्तरगुणेषु किञ्चिद्विराधकत्वम्।

कषायकुशीलनिर्ग्रन्थस्नातकानां विराधना नास्ति।

तीर्थद्वारम्। सर्वेषां तीर्थकराणां तीर्थे सर्वे भवन्ति, मतान्तरे पुलाकबकुशप्रतिसेवनाकुशीलास्तीर्थे नित्यं भवन्ति, शेषास्तु तीर्थेऽतीर्थे वा भजनया।

लिङ्गद्वारम् । लिङ्गं द्विविधम्, द्रव्यभावभेदात् ।

तत्र द्रव्यलिङ्गं रजोहरणमुखवस्त्रिकादिकं, भावलिङ्गं ज्ञानदर्शनचारित्राणि । तथा च सर्वे पुलाकादयो भावलिङ्गे भवन्ति, द्रव्यलिङ्गे तु भजना, कदाचिद्रजोहरणादिकं भवति कदाचिन्नेति मरुदेवीवत् ।

लेश्याद्वारम् । पुलाकस्य पीतपद्मशुक्लनामानः तिस्रो भवन्ति, बकुशप्रतिसेवनाकुशीलयोः सर्वाः षडपि लेश्या भवन्ति, परिहारविशुद्धसंयमप्राप्तस्य कषायकुशीलस्य तिस्र उत्तरा लेश्या भवन्ति; सूक्ष्मसंपरायसंयमप्राप्तस्य कषायकुशीलस्य तथा निर्ग्रन्थस्य तथा सयोगिस्नातकस्य च त्रयाणां शुक्लैव लेश्या भवन्ति, शैलेशीप्रतिपन्नस्य स्नातकस्य लेश्या नास्ति ।

उपपातद्वारम् । पूर्वभवं परित्यज्य भवान्तरप्राप्तिरुपपातः ।

तत्र च पुलाकस्योत्पत्तिः सहस्रारदेवे, बकुशप्रतिसेवनाकुशीलयोरारणाच्युतकल्पयोः, कषायकुशीलनिर्ग्रन्थयोः सर्वार्थसिद्धिविमाने, स्नातकस्य निर्वाणम् । सर्वेषामपि निर्ग्रन्थानां जघन्योत्पत्तिः पल्योपमपृथक्त्वस्थितिषु देवेषु सौधर्मेषु ।

अथ स्थानद्वारम् । सर्वजघन्यसंयमस्थानानि पुलाक-

कुशीलयोः, तौ युगपदसंख्येयस्थानानि गच्छतः। ततः पुलाको व्युच्छिद्यते। कषायकुशीलस्तु असंख्येयस्थानानि एकैको गच्छति, ततः कषायकुशीलप्रतिसेवनाकुशीलबकुशा युगपदसंख्येयस्थानानि गच्छन्ति, ततो बकुशो व्युच्छिद्यते। ततोऽसंख्येयस्थानानि गत्वा प्रतिसेवनाकुशीलो व्युच्छिद्यते। ततोऽसंख्येयस्थानानि गत्वा कषायकुशीलो व्युच्छिद्यते। अत ऊर्ध्वमकषायस्थानानि निर्ग्रन्थः प्रतिपद्यते। सोऽपि असंख्येयस्थानानि गत्वा व्युच्छिद्यते। अत ऊर्ध्वं स्थानं गत्वा निर्ग्रन्थस्नातको निर्वाणं प्राप्नोतीत्येषां संयमलब्धिरनन्तगुणा भवति। अत्र स्थानपदेनाध्यवस्थानं वा परिणामस्थानं वा संयमस्थानं वा गृह्यते। तत्र यावत्कषायस्तावत् संक्लेशविशोधयोऽवश्यभाविन्यः। क्षीणकषायस्य तु विशोधिरेव, न संक्लेशः। तत्र कषायस्यासंख्येयानि संयमस्थानानि, भावना त्वियं कार्या—पुलाककषायकुशीलयोः सर्वजघन्यस्थानानि यानि सन्ति, अधस्ततस्तौ युगपदसंख्येयस्थानानि गच्छतः, तुल्याध्यवसायत्वात्, ततः पुलाको व्युच्छिद्यते, हीनपरिणामत्वात्। व्युच्छिन्ने पुलाके कषायकुशील एक एवासंख्येयानि स्थानानि गच्छति, वर्धमानपरिणामत्वात्, कषायप्रतिसेवनाकुशीलबकुशा युगपदसंख्येयस्थानानि गच्छन्ति, ततो बकुशो व्युच्छिद्यते, ततः तावन्ति गत्वा प्रतिसेवनाकुशीलो व्युच्छिद्यते। ततस्तावन्ति गत्वा कषायकुशीलो व्युच्छिद्यते। ततो निर्ग्र-

न्योऽसंख्येयस्थानानि गत्वा व्युच्छिद्यते। अत ऊर्ध्वं गत्वा क्षपितसकलकर्मांशः स्नातको निर्वाणं प्राप्नोति।

इति ए-एम्-ए-एस्-वीत्युपाधियुक्त-शास्त्रविशारद-जैनाचार्य-श्रीमद्वि-
जयधर्मसूरीश्वरचरणारविन्दमृङ्गायमाणेन न्यायतीर्थ-न्यायवि-
शारदोपाधियुक्तेन प्रवर्त्तकश्रीमङ्गलविजयेन विरचिते
जैनतत्त्वप्रदीपाख्ये ग्रन्थे निर्जरातत्त्ववर्णननामा
षष्ठोऽधिकारः समाप्तः।



# सप्तमोऽधिकारः ।

अथ मोक्षाधिकारो निरूप्यते—

मोहनीये क्षीणे ज्ञानदर्शनावरणान्तरायेषु च क्षीणेषु सत्सु केवलज्ञानदर्शनं समुत्पद्यते, आसां चतसृणां प्रकृतीनां क्षयः केवलस्य हेतुस्ततः क्षयादुत्पद्यत इति स्थितम् । मोहनीये क्षीणे इति पृथक्करणं तु क्रमप्रसिद्ध्यर्थम् । पूर्वं मोहनीयं कृत्स्नं क्षीयते, ततोऽन्तर्मुहूर्तं छद्मस्थवीतरागो भवति, ततोऽस्य ज्ञानदर्शनावरणान्तरायाणां तिसृणां प्रकृतीनां युगपत्क्षयो भवति, ततः केवलमुत्पद्यते ।

अथ मोहनीयादीनां क्षयः कथं भवतीति प्रतिपादनायोच्यते—

आत्मप्रदेशानां कर्मपुद्गलानां चान्योन्यानुगतसंबन्धलक्षणो बन्धः, तस्य हेतुर्मिथ्यादर्शनाविरतिप्रमादकषाययोगलक्षणः पञ्चविधः, तस्याभावात् पूर्वकर्मागमनस्याऽभावो भवति । प्रथमबद्धस्य च कर्मण आत्मप्रदेशेभ्यः परिशटनलक्षणा निर्जरा भवति, ततश्च फलितार्थो निगद्यते—

बन्धहेत्वभावनिर्जराभ्यां हेतुभ्यां कर्मपरिक्षयो भवतीति मिथ्यादर्शनादिबन्धहेतवः कथिताः, तेषां सम्यग्दर्शनाविरत्यप्रमादक्षमामार्जवार्जवसंतोषादौ प्राप्ते सति क्षयो

भवति, एवं सति सम्यक्संवृतस्यात्मनोऽपूर्वकर्मचयो न भवति। पूर्वोपचितस्य च यथोक्तनिर्जराहेतुभिरत्यन्तक्षयः। ततः सर्वद्रव्यपर्यायविषयकं परमैश्वर्यरूपमनन्तं केवलज्ञानदर्शनं प्राप्य शुद्धो बुद्धः सर्वज्ञः केवली भवति। ततः प्रतनुचतुष्कर्मावशेष आयुःकर्मसंस्कारवशाद् विहरति। ततोऽस्य कृत्स्नकर्मक्षयलक्षणो मोक्षो भवति। पूर्वं क्षयं गतानि चत्वारि कर्माणि, पश्चाद् वेदनीयनामगोत्रायुषां च क्षयो भवति। अन्यच्च तत्क्षयसमकालमेवौदारिकशरीरवियुक्तस्यास्य जन्मनः प्रहाणं भवति, हेत्वभावाच्चोत्तरस्याप्रादुर्भाव एव।

किञ्च, औपशमिक—क्षायोपशमिकौदयिका भावा सिद्धावस्थायां सर्वथा न सन्त्येव, क्षायिकभावे तु क्षायिकसम्यक्त्वं केवलज्ञानं केवलदर्शनं सिद्धत्वं च संभवति; पारिणामिकभावे तु केवलं भव्यत्वमेव न संभवति, अस्तित्वादयः शेषास्तु प्रायेण सन्ति।

स पुनर्मुक्तात्मा यत्र सकलकर्मविमुक्तो भवति, तत्रैवावतिष्ठते उतान्यत्रेति जिज्ञासायां प्रोच्यते—

कृत्स्नकर्मक्षयानन्तरं चोर्ध्वं गच्छत्यालोकान्तात्। सकलकर्मक्षये देहवियोगसिध्यमानगतिलोकान्तप्राप्तयोऽस्य युगपदेकसमये भवन्ति। यथा प्रयोगपरिणामादिसमुत्थस्य गतिकर्मण उत्पत्तिकार्यारम्भविनाशा युगपद् भवन्ति, तथैव

प्रहीणकर्मणो निराश्रयस्य भवन्ति, 'अन्यथा वेति जिज्ञासायामुच्यते—

पूर्वप्रयोगादसङ्गत्वाद् बन्धविच्छेदात्तथागतिपरिणामाच्चतद्गतिः, तदर्थस्तु स्फुटतया प्रतिपाद्यते—

तथाहि—यथा हस्तेन दण्डः संयुक्तः, दण्डेन चक्रं संयुक्तसंयोगम्, तस्माद् हस्तदण्डचक्रसंयुक्तसंयोगात् पुरुषप्रयत्नेन प्रेरितं चक्रमुपरतेष्वपि पुरुषव्यापारेषु पूर्वप्रयोगाद् हस्तादिव्यापारप्रेरणाद् भ्रमत्येव, संस्कारपरिक्षयाभावात्। संस्कारो नामानुपरतक्रियाप्रबन्धरूपः। तथैव यः पूर्वमस्य यत्कर्मणा प्रयोगो जानितः स क्षीणोऽपि गतिकर्महेतुर्भवति, इति पूर्वप्रयोगकृतगतिर्मुक्तस्य सिद्धा भवति।

अथ मुक्तस्य गतिहेतुभूतमसङ्गत्वं प्रतिपाद्यते—

गुरुकृष्णमृत्तिकालेपबहुभिर्घनमालिप्तं घनमृत्तिकावेष्टनजनितागन्तुकगौरवमलाबु जले प्रक्षिप्तं तत्प्रतिष्ठितं भवति, यदा त्वस्य जलेन क्लिन्नो मृत्तिकासङ्गलेपो विनिर्मुक्तस्तदानन्तरमूर्ध्वमेव गच्छत्या सलिलोर्ध्वतलात्, तथात्रापि ऊर्ध्वगौरवगतिधर्मा जीवोऽष्टविधकर्ममृत्तिकालेपवेष्टितः सन् संसारमहार्णवे निमग्नो भवासक्तोऽधस्तिर्यगूर्ध्वं गच्छति। सम्यग्दर्शनसलिलक्लेदानुप्रहीणाष्टविधकर्ममृत्तिकालेप ऊर्ध्वगौरवादूर्ध्वं गच्छत्यालोकान्तात्। तत ऊर्ध्वं मुक्तस्य गतिः कुतो न भवतीति शङ्कायां समाधीयते—

धर्मास्तिकायाभावात् । जीवपुद्गलानामुपग्रहकारणं धर्मास्तिकायः, तस्याभावात् परतो गतिर्नास्ति, यथाऽलाबुनो नाधो नापि तिर्यक् किन्तु तत्रैवोर्ध्वमनुश्रेणि गतिः, एवं मुक्तोऽपि निष्क्रियो लोकान्तेऽवतिष्ठते ।

बन्धच्छेदादिति, यथा रज्ज्वा गाढं बद्धायाः कीचकविदलघटिताया रज्जुबन्धच्छेदादुपरितनपुटस्यागमनमूर्ध्वं दृष्टम्, यथा वा बीजीकोशः फलं फली वा तस्या बन्धनं गाढसंपुटता, तस्याः सवितृकिरणतापशोषितायाः परिणतिकाले संपुटोद्भेदलक्षणश्छेदः, तस्माद् बन्धच्छेदादेरण्डादिफलभेदे बीजानां गतिः, यथा बीजान्युड्डीय दूरे पतन्ति, तथा कर्मबन्धोऽत्र फलादिस्थानीयः, तस्य च्छेदात्तद्विघटनानन्तरमेवोर्ध्वं गच्छत्यालोकान्तात् ।

तथा गतिपरिणामाच्च सिद्ध्यमानस्य गतिर्भवति । गतिमत्त्वमत्र जीवपुद्गलानां भवति, नान्यद्रव्याणाम् ।

तत्राधोगौरवधर्माणः पुद्गलाः, ऊर्ध्वगौरवधर्माणो जीवाः, एष स्वभावः । तथा च सत्सु प्रयोगादिषु गतिकारणेषु जातिनियमेनाधस्तिर्यगूर्ध्वं स्वाभाविक्यो लोष्टवायुवह्नीनां गतयो दृष्टाः, तथा कर्मसङ्गविमुक्तस्योर्ध्वगौरवादूर्ध्वमेव सिद्ध्यमानस्य गतिः, संसारिणस्तु कर्मसंयोगादधस्तिर्यगूर्ध्वं च गतयो भवन्ति ।

एवं च निसर्गाधिगमयोरन्यतरत्र तत्त्वार्थश्रद्धानात्मकं

शङ्काद्यतिचारवियुक्तं प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणं विशुद्धसम्यग्दर्शनं प्राप्य सम्यग्दर्शनोपलम्भाच्च विशुद्धज्ञानं प्राप्य प्रमाणनयनिक्षेपाद्युपायैर्जीवाजीवानां तथा पञ्चानां भावानां स्वरूपं ज्ञात्वा तथाऽनादिमतां धर्मास्तिकायादिद्रव्याणामादिमतामिन्द्रधनुरादीनां स्थित्युत्पत्तिव्ययानामनुग्रहोपघातकारणं ज्ञात्वा सांसारिकभावेभ्यो विरक्तः पञ्चसमितित्रिगुप्तियुक्तो दशलक्षणधर्मानुष्ठानात् फलदर्शनाच्च निर्वाणप्राप्तिप्रयत्नाभिवर्द्धितश्रद्धासंवेगो भावनाभिर्भावितात्माऽनुप्रेक्षाभिः स्थिरीकृतात्मा संवृतत्वादनभिष्वङ्गो निराश्रवत्वाद् विरक्तत्वाद् विगततृष्णत्वाच्च व्यपगताभिनवकर्मोपचयः, परीषहजयाच्च बाह्याभ्यन्तरतपोऽनुष्ठानादनुभावतश्च सम्यग्दृष्टिविरतादीनां जिनपर्यन्तानां परिणामाध्यवसायविशुद्धिस्थानान्तराणामसंख्येयगुणोत्कर्षप्राप्तोऽपूर्वकर्म निर्जरयन् सामायिकादीनां सूक्ष्मसंपरायपर्यन्तानां संयमविशुद्धिस्थानानां पुलाकादिनिर्ग्रन्थानां पालनविशुद्धिस्थानविशेषाणामुत्तरोत्तरप्रतिपत्त्या घटमानोऽत्यन्तप्रहीणार्त्तरौद्रध्यानो धर्मध्यानविजयादवाप्तसमाधिबलः पृथक्त्वैकत्ववितर्कशुक्लध्यानयोश्चान्यतरस्मिन् वर्त्तमानो नानाविधलब्धिविशेषान् प्राप्नोति । ततोऽस्य निस्तृष्णत्वात्तत्त्वनभिष्वक्तस्य मोहक्षयपरिणामावस्थस्याष्टाविंशतिविधं मोहनीयं निर्विशेषतो हीयते । ततश्च छद्मस्थवीतरागत्वं प्राप्तस्यान्तर्मुहूर्त्तेन ज्ञानदर्शनावरणान्त-

रायलक्षणानि त्रीणि कर्माणि निर्विशेषतो हीयन्ते। ततः संसारबीजबन्धविनिर्मुक्तः तथा फलबन्धनरूपमोहनीयादिना विनिर्मुक्तः स्नातकोऽन्तर्मलापगमात् परमेश्वरो जिनः केवली। ततो वेदनीयनामगोत्रायुष्कक्षयात् तत्फलबन्धनविनिर्मुक्तो निर्दग्धपूर्वोपात्तेन्धनो निरुपादानवह्निरिव पूर्वोपात्तौदारिकशरीरवियोगाद् हेत्वभावाच्चोत्तरस्याप्यनुत्पादाच्छान्तः सांसारिकसुखमतीत्यात्यन्तिकमैकान्तिकं निरुपमं निरतिशयं निर्वाणसुखं प्राप्नोतीति शम्।

इति ए-एम्-ए-एस्-बीत्युपाधियुक्त-शास्त्रविशारद-जैनाचार्य-श्रीमद्विजयधर्मसूरीश्वरचरणारविन्दभृङ्गायमाणेन न्यायतीर्थ-न्यायविशारदोपाधियुक्तेन प्रवर्त्तकमङ्गलविजयेन विरचिते जैनतत्त्वप्रदीपाख्ये ग्रन्थे मोक्षतत्त्ववर्णननामा सप्तमोऽधिकारः समाप्तिं गतः।



# प्रशस्तिः ।

नानाशाखाप्रशाखाभिः स्फातिं वट इवादधत्।
छायां पुष्णन् श्रियं काञ्चिद्विभर्तीह तपागणः ॥१॥
चञ्चच्चक्रं निबिडतमसां स्वीयगोभिर्हरन्तः
शश्वत् प्राप्योदयमविहतं शोषयन्तो जडौघम्
भास्वन्तोऽपि ध्रुवमदधतस्तापलेशं जनानां
तत्राभूवन्ननुपमरुचो भूरयः सूरयस्ते ॥२॥
अपि सूरिः सुरेशस्य विद्यया यैस्तिरस्कृतः ।
वादिश्रीदेवसूर्याद्याः श्रीहीरविजयाः पुनः ॥३॥
(युग्मम्)

तत्पट्टे क्रमतोऽभूवन् बहुशः सूरिपुङ्गवाः ।
श्रीबुद्धिविजयं यावद् गुणरत्नमहोदधिम् ॥४॥
वर्षं वर्षं विमर्षोपहितहितवचःस्फारपीयूषयूषं
हर्षं हर्षं वितर्षं बहुबहुभविकप्राणिपर्षच्चकोरान् ।
यः शान्तात्माऽनुकुर्वन्नपि रजनिमणिं नाप दोषाकरत्वं
चित्रं चापत्क्षणेनोदयमनपहतं वृद्धिचन्द्रस्ततोऽभूत् ॥५॥
तत्पादाम्भोजसंसेवासंप्राप्तसंपदावलिः ।
तस्यानेकेषु शिष्येषु मध्यमोऽपि गुणैर्महान् ॥६॥
यस्यातुल्ययमक्षमादिसहितैस्तत्तद्गभीरागमा-
म्भोध्यालोडनमन्दराद्रिसदृशैः प्रज्ञागुणैर्विस्मितः ।
मध्येकाशि स काशिदेशनृपतिः काश्यादिवङ्गान्तजै-
र्विद्वद्भिः सह सर्वशास्त्रनिपुणैर्यामार्पिपत् सादरम् ॥७॥
शास्त्रविशारदजैनाचार्येति तया विभूषितः पदव्या ।
नन्द्यात् सोऽयं गुरुर्मे श्रीमान् विजयधर्मसूरीशः ॥ ८ ॥
(त्रिभिर्विशेषकम्)

शिष्येषु तस्य प्रथमे मुनीश्वरा
ऐतिह्यविद्यार्णवपारगामिनः ।

जयन्त्युपाध्यायपदाभिशालिन
इन्द्रादिशब्दा विजया गुणान्विताः ॥९॥
किञ्चापरे सुविहिताचरणेषु लीना
ज्ञानाढ्यभक्तिविजयाः क्षमयाभिरामाः ।
श्रीयुक्तरत्नविजयाः कविशीर्षरत्नं
वाचंयमा बहुगुणाकलिता जयन्ति ॥१०॥
साहित्यवित्स्वधिगतप्रवरप्रतिष्ठाः
शास्त्रेष्वनारतकृतप्रचुरप्रयत्नाः ।
सद्ग्रन्थगुम्फनकृतान्यजनोपकारा
विद्येतिपूर्वविजया मुनयो जयन्ति ॥११॥
बाल्येऽपि ये कठिनदुर्गमतर्कगर्भान्
सद्गद्यपद्यरचनामधुराननेकान् ।
ग्रन्थान् व्यधुर्विबुधविस्मयकारकास्ते
न्यायेतियुक्तविजया यमिनो जयन्ति ॥१२॥
गाम्भीर्यतो जलनिधिं पतिमब्जिनीनां
तेजोभरैर्गिरिपतिं स्थिरतानुभावात् ।
तापापहारकरणाच्च जयन् हिमांशुं
श्रीमान् जयन्तविजयो विजयं बिभर्त्ति ॥१३॥
निःस्पृहाः सङ्गनिर्मुक्ता देवेन्द्रविजयाः पुनः ।
इत्याद्या लघवो यस्य सतीर्थ्याः प्रथमान् विना ॥१४॥
राजकीयपरीक्षायां समुत्तीर्णेन येन च ।
न्यायतीर्थपदं प्राप्तं कलिकातापुरे वरे ॥१५॥
तेन प्रवर्तकपदोपपदेन जाते
संवत्सरे हुतवहर्षिनवेन्दुसंख्ये ( १९७३ ) ।
श्रीमङ्गलादिविजयेन विनिर्मितोऽयं
ग्रन्थः परोपकृतिकर्मठमानसेन ॥१६॥

[ षड्भिः कुलकम् ]

# लक्षितशब्दानामनुक्रमणिका ।

समाप्ता ।



# शुद्धिपत्रम् ।

—:*:—

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १७ | ११ | रक्तवर्ण | पीतवर्ण |
| ,, | १३ | पीतवर्ण | रक्तवर्ण |
| ,, | १५ | पतितफलादनेच्छया फल | फलादनेच्छया पतितफल |
| २० | १ | श्रोत्र चक्षु | श्रोत्र-चक्षु- |
| २५ | १२ | ० | अथवा |
| २६ | ५ | योनिमृदुतास्थैर्यमुग्धता | योनिमृदुताऽस्थैर्य-मुग्धता |
| २७ | ७ | रूपवत्वं | रूपवत्त्वं |
| ३१ | १५ | भूतार्थं | भूतार्थत्वं |
| ,, | १७ | पुद्गलौविना | पुद्गलौ विना |
| ३८ | १५ | गतानां मध्ये | गतानामुत्पादादीनां मध्ये |
| ३९ | २० | बध्यते | बध्यन्ते |
| ४० | ४ | पादकत्वं पारिणामिकस्य | पादकत्वम् |
| ,, | २१ | द्विगुणाद्यधिकस्निग्धस्य | स्निग्धस्य |
| ,, | ,, | द्विगुणाद्यधिकरूक्षस्य | रूक्षस्य |
| ४७ | ५ | ० | अर्हत्प्रवचनोक्तमार्गाद् विपरीतमार्गे सततप्रयाणपूर्वककुसाधुदेवाचरितक्रियाया अनुमोदनरूपत्वं मिथ्यादर्शनक्रियाया लक्षणम् । |
| ४९ | १३ | समारम्भादि | संरम्भादि |
| ,, | २० | संरम्भ | समारम्भ |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५१ | १० | शीतोष्णपीतपायकशक्ति | शीतोष्णादिशक्ति |
| ,, | २० | गुणनिर्वर्तना | गुणनिर्वर्तना |
| ५२ | ५ | तदपि च | तच्च |
| ,, | ६ | प्रत्यवेक्षित | अप्रत्यवेक्षित |
| ,, | ८ | निक्षेप्य वस्त्रादि | निक्षेप्यवस्त्रादि |
| ,, | १० | ,, | ,, |
| ,, | १३ | निक्षेप्य वस्तुनो | निक्षेप्यवस्तुनो |
| ,, | १७ | ,, | ,, |
| ५३ | १२ | शास्त्र | शस्त्र |
| ,, | १५ | या जोया | याजोया |
| ५४ | २० | रूवत्यं | रूपत्यं |
| ५५ | ३ | दायोद्भावन | दोषोद्भावन |
| ५६ | ५ | व्रतिनः | व्रतिनो लक्षणम् । |
| ५७ | १३ | तच्च | स च |
| ६१ | १९ | प्रेषणी | वेषणी |
| ६२ | २१ | निर्वृत्ति | निवृत्ति |
| ६३ | ७ | सेवनयागर्हिंसादि | सेवनादि |
| ६४ | ४ | भक्तिश्राव | भक्त्याव |
| ६५ | १३ | विश्राम | विश्रामण |
| ६६ | १८ | प्रशंसानुद्भूतवृत्तितोद्भावन | प्रशंसाच्छादनोद्भावन |
| ७० | २ | निक्षपेणा | निक्षेपणा |
| ७१ | १९ | याच्ञानै | याचनै |
| ७२ | १ | पतिशय्या | पतिसाधर्मिकशय्या |
| ७५ | ६ | सवेदन | संवेदन |
| ७६ | १७ | पातविरति | पातादिविरति |
| ७७ | १५ | गस्य | गम्रतस्य |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ७७ | १६ | रूपत्वं, | रूपत्वमनर्थदण्डविरतेर्लक्षणम् । |
| ,, | १७ | वा | ० |
| ८१ | १७ | ० | येषां मते रहस्याभ्याख्याने सहसाभ्याख्यानमन्तर्गतं तेषां मते न्यासापहाररूपः पञ्चमोऽतिचारः प्रतिपाद्यते । |
| ८२ | १९ | साधारण | साधारण |
| ,, | २२ | ० | अन्येन स्वीकृतायां स्त्रियां गमनरूपत्वं परगृहीतगमनस्य लक्षणम् । |
| ८४ | २१ | अधोलौकिक | अधोलौकिक |
| ८६ | १४ | ० | संयुक्ताधिकरणस्थानेऽसमीक्ष्याधिकरणं केचिद् मन्यन्ते तदपेक्षया मूलेऽप्युक्तमत्रापि प्रतिपाद्यते । |
| ८६ | २० | स्थान | स्थापन |
| ८७ | १ | मनभृत | मनवभृत |
| ८८ | ३ | निक्षेपाः | निक्षेपसंस्तारोपक्रमणानि |
| ,, | ११ | ग्रहणलक्षण | ग्रहणनिक्षेपलक्षण |
| ८९ | ९ | भिक्षाकरण | भिक्षादान |
| ९० | १८ | ह्रानादि | ह्रानसंस्कार |
| ९२ | ३ | विरतिकषाय | विरतिप्रमादकषाय |
| ९२ | ६ | मुक्तमेव । | मुक्तमेव । अथवा मिथ्यात्वमोहनीयकर्मपुद्गलसाचिव्यविशेषादात्मपरिणामविशेषरूपत्वं मिथ्यात्वस्य लक्षणम् । |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९३ | ८ | विधः प्रमादोऽपि । अत्र | विधः । प्रमादोऽप्यत्र |
| ,, | ९ | उच्यते लक्षणतः । | उच्यते । लक्षणतो |
| १०० | १६ | नुबन्ध, | नुबन्धि |
| १०१ | ३ | भाप | भाम |
| १०३ | ३ | मार्जिताद्रि | मार्जितादि |
| ,, | ७ | संसक्ता चा | संसक्ताश्चा |
| १०४ | १० | जातिशरीरा | जाति-शरीरा |
| ,, | १३ | करनिर्माणो | कर-निर्माणो |
| ,, | १४ | सुभ-शुभग | शुभ-सुभग |
| ,, | ,, | देययशः | देय-यशः |
| ,, | १५ | दुर्भगदुःस्वरा | दुर्भग-दुःस्वरा |
| ,, | २१ | ० | अङ्गोपाङ्गं त्रिधा, औदारिक-वैक्रियाहारकशरीराङ्गोपाङ्गभेदात् । |
| १०७ | २० | ० | तत्राङ्गानि अष्टौ, मस्तकादि भेदात् । |
| १०८ | २१ | वर्ज्रर्षभ | वज्रर्षभ |
| १०९ | २० | नामनिष्पादिता | नामकर्मनिष्पादिता |
| ११० | १ | विनिवेष्टव्यम् | विनिवेष्टव्यम्, |
| ११३ | ३ | परिणतं | परिणतिं |
| ११४ | २० | रूपत्वं शुभ | रूपत्वमशुभ |
| ११५ | २ | दुस्वर | दुःस्वर |
| ११५ | १६ | ० | यस्योदये सति ईप्सितावाप्तिर्न भवति तल्लाभान्तरायस्य लक्षणम् । |
| ११६ | १ | मूल | मूलोत्तर |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११६ | २ | निर्जीयते | निर्जीर्यते |
| ,, | ९ | 0 | मोहनीयस्य सप्ततिकोटाकोटयः परा स्थितिः । |
| ,, | १३ | 0 | नामगोत्रयोरष्टौ मुहूर्ताः । |
| ११८ | २० | अतः | अत आपेक्षिकं |
| ११९ | १४ | रपि अनन्ता | रपि । अनन्ता |
| १२० | ४ | सद्गुदेवा | सद्धर्मदेवा |
| ,, | ५ | त- | त |
| ,, | १२ | मुच्चैर्गोत्रं | मुच्चैर्गोत्रम् । |
| १२१ | ३ | सहेति | सहेति, |
| १२२ | ५ | परिमाण | परिणाम |
| ,, | ९ | अवः | अथाः |
| ,, | १८ | वाच्छतां | वाञ्छतां |
| १२३ | १ | परिषह्-जय | परिषहजय |
| ,, | ६ | पूवक | पूर्वक |
| १२४ | ४ | भापे | ईर्याभापे |
| ,, | १७ | प्रमाजन | प्रमार्जन |
| १२५ | १७ | रूपत्वम् | रूपत्वम्, |
| १२६ | १ | उदितस्य | सत्युदितस्यास्तस्या |
| १२७ | १२ | वाह्मा | वाह्या |
| १२८ | २१ | तया | तथाहि |
| १२९ | ३ | मृतस्या | मृतस्या |
| १३१ | १४ | पिपासा शीतो | पिपासा-शीतो |
| ,, | ,, | दंश-मशक | दंशमशक |
| ,, | १५ | नाग्न्याऽरति | नाग्न्याऽ-रति |
| ,, | ,, | निषद्या-क्रोश | निषद्या-शय्या-ऽऽक्रोश |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३१ | १५ | ऽलाभ-तृण | ऽलाभ-रोग-तृण |
| ,, | १६ | सत्कार-पुरस्कार | सत्कारपुरस्कार |
| १३२ | ३ | गवेपयत | गवेषयतः |
| १३४ | १५ | पटकौ | पट्टकौ |
| १३५ | १ | दुर्गन्धिमहान्त | दुर्गन्धिर्महान्त |
| ,, | ४ | ० | आगमोक्तविधिना सत्कारपुरस्कारपरीषहोऽपि परिषेतव्यो भवति। |
| ,, | १५ | योभवेत् | यो भवेत् |
| ,, | १९ | धर्मौ | धर्मी |
| ,, | २१ | प्रत्यक्ष एव | प्रत्यक्षभूतायेव |
| १३६ | १७ | यतेः छद्म | यतेः। छद्म |
| ,, | २२ | संयतेषु | संयतेषु |
| १३७ | ४ | दये प्रज्ञा | दयेऽप्रज्ञा |
| ,, | ५ | हिज्ञा | हि ज्ञा |
| ,, | ६ | शमो | शमः, |
| १३८ | ६ | प्रकार | प्रकरण |
| ,, | १९ | अद्दधतः । छेदोप | अद्दधतः साधोश्छेदोप |
| १३८ | २१ | देशं नहातीति | देशः परिहीयते । |
| १४१ | ८ | तपः | तपसा |
| ,, | १४ | वृति | वृत्ति |
| १४२ | १० | चयादीनां कुलमासादीनां | चर्यादीनां कुल्मापादीनां |
| ,, | १६ | कारणमुक्त्वा | कारणं मुक्त्वा |
| १४३ | ६ | त्रान्त्तंभूता | त्रान्तर्भूता |
| ,, | १९ | नि.सङ्गादि | नि.सङ्गादि |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १४४ | १७ | प्रतिक्रमवणे | प्रतिक्रमणे |
| १४६ | १३ | अर्हदाचार्यो | आचार्यो |
| ,, | १४ | नकुल | नगणकुल |
| ,, | १९ | मनोज्ञानिवा | मनोज्ञानि वा |
| ,, | २० | चारित्राणितैः | चारित्राणि तैः |
| १४७ | १ | पानाम्न | पात्राम्न |
| ,, | १२ | ० | ग्रन्थार्थयोर्मनसाभ्यसनरूपत्वमनुप्रेक्षाया लक्षणम् । |
| १४९ | ६ | शिरः-कम्प | शिरःकम्प |
| १५२ | ६ | ह्रस्वा | पञ्चह्रस्वा |
| १५३ | १३ | प्रतिपत्ति | प्रतिपाति |
| ,, | १८ | संवरत्वादूभिनय | संवरत्वादभिनव |
| १५४ | ६ | संवर | संवर |
| १५५ | ६ | वकुश | बकुश |
| ,, | १० | रूपत्त्वं | रूपत्वं |
| १५६ | ८ | शैलेश्य | सयोगिशैलेश्य |
| ,, | २१ | कुशलि | कुशील |
| १५७ | १ | केवल | केवल |
| ,, | २ | मव | मेव |
| १५८ | ४ | लिङ्गे | लिङ्गे |
| १५९ | १ | कुशीलयोः | कषायकुशीलयोः |
| ,, | १५ | अधस्तनस्तौ | ततस्तौ |
| ,, | २० | व्यच्छिद्यते | व्युच्छिद्यते |
| १६१ | १३ | भावात् पूर्व | भावादपूर्व |
| ,, | १८ | सम्य | सम्यग् |
| ,, | १९ | मार्जवा | मार्दवा |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६३ | १ | निराश्रयस्य | निराश्रयस्य |
| १६५ | १ | नुकम्पास्तिकत्या | नुकम्पास्तिक्यः |

